गौतमः।

अभ्रदर्शने चापर्त्ताविति।

'अभ्रं' जलधरोमेघः।

यमः।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।

कदाचिदपि नाध्येयं कोविदार-कपित्थयोः॥

यत्तु मनुनोक्तं।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।

स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः॥ इति।

तद्ब्रह्मयज्ञाध्ययनविषयं।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तरीयकाः समामनन्ति।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश-इति।

अतएव मनुरपि।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।

नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्यायः' ब्रह्मयज्ञसम्बन्धी, होममन्त्रग्रहणं बलियज्ञादिमन्त्राणामप्युपलक्षणं।

नैत्यिके नास्त्यनध्यायो ब्रह्मयज्ञन्तु तत् स्मृतं।

ब्रह्माहुतिहुतिं पुण्यमनध्यायवषट्कृतं।

अपूर्वग्रहणार्थं वानध्यायो न तु कर्मणि॥

प्रयोगपारिजातकोऽपि।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च।
नानध्यायोभवेदेवं ग्रहणे चाह यो स्मृतः[१] ॥ इति।

पुराणात्।

शिष्योऽध्ययनञ्च कुर्वन्ननध्यायान् विवर्जयेत्।
अध्यापनञ्चापि कुर्वन् अनध्यायान् विवर्जयेत् ॥

मनुः।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत्।
अध्यापनञ्च कुर्वाणः शिष्याणां विधिपूर्वकं ॥

तथा।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरसः सदा।
नित्ये नैमित्तिके कार्ये व्रते यज्ञे क्रतौ तथा ॥
प्रक्रमे कामकार्ये च नानध्यायाः स्मृतास्तथा।
देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥

तथा।

चतुर्दश्यष्टमी-पर्व-प्रतिपत्स्वेव सर्वदा।
दुर्मेधसामनध्यायस्त्वन्तरा गमनेषु च।
न च विस्मृतिशीलानां बहुवेदप्रपाठिनां ॥
चतुर्दश्यष्टमी-पर्व-प्रतिपद्वर्जितेषु च।
वेदाङ्ग-न्याय-मीमांसा-धर्मशास्त्राणि चाभ्यसेत् ॥

गौतमः।

प्रतिविद्यं यावत्स्मामनन्ति तथा चतुष्पथे भोजनोत्तरकालं

(१) "ग्रहणे चाह यो स्मृतः" इत्ययं पाठः न समीचीनो विभाति।

छन्दोगानामनध्यायः, तथाच प्राग्भोजनीयात् प्रादादधीयारण्य-
गेयानि ।

आपस्तम्बः ।

यथोक्तमन्यदन्तपरिषत्स्वपि ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसक-
लविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ
परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः ।

तत्र याज्ञवल्क्यः ।

केशान्तश्चैव षोडशे ।

'केशान्तः' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं ।

यदाह मनुः ।

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः ॥

ज्योतिःशास्त्रे ।

यान्युक्तानि चौरेषु भानि तान्येव क्षुराकरणे ।
उपनयने गोदाने केशान्ते च शस्तानि ॥

इति केशान्तकर्मकालः ।

---

## अथ ब्रह्मचर्य्यकालविधिः ।

तत्रापस्तम्बः ।

उपेतस्याचार्य्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादो-नमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोवरोपवासोऽस्ति । त्रिभिः पादैरूनं द्वादशवर्षाणीत्यर्थः, एतच्चाशक्तविषयं ।

यदाह देवलः ।

अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्य्यामातिष्ठेत अशक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं चेति ।

एतत्प्रतिवेदविषयं ।

यदाह यमः ।

चरेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा ।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्यास्थिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्याञ्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रह-णान्ते वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्य्यमाचरेत् ।

मनुः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैविद्यकं व्रतं ।
तदर्द्धं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अस्यार्थः ।

त्रैविद्या ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्य्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्रीण्येव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्य्यकालनिर्णयः ।

## अथ समावर्त्तनकालः।

तत्र दक्षः।

स्वीकरोति यदा वेदं धत्ते वेदव्रतानि च।
ब्रह्मचारी भवेत्तावत्ततः पश्चाद्गृही भवेत्॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं।

तथाच स्मृत्यन्तरे।

वेदमधीत्य च्छन्दोविषयानर्थान् बुद्धा स्नायात्।

तथाच व्यासः।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुं।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति॥
यथा पशुर्भारहारी न तस्य लभते फलं।
द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत्।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा॥
योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत्।
स सान्वयः पशुसमः[१] पात्रतां न प्रपद्यते॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः।
स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानचिह्नितः।
श्रुतहीनधनः सोऽपि यत्नेनामुत्र तद्भवेत्॥

तथा।

ज्ञानं कर्म्म च संयुक्तं मनुना कथितं यथा।

---

(१) खरसमः इति ख०।

अधीतं व्रतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
एकपादमप्यधीत्यान्तर्न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तत्र हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य स विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बश्चाधायाधीत्येके[१] तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानादुपरिष्टात्त्रिषवणमुदकमुपस्पृशन्नग्निपक्वद्भिरस्नायोगस्नानार्तिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्टचत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां समाप्य विधिवत् द्विजः ।

(१) पाठोऽयं न समीचीनो विभाति ।

स्नायीत तदनुज्ञातो दत्त्वास्मै दक्षिणां हि गां ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन चेतुना 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यन्दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायादसौ तदनुज्ञया वेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः। 'क्रमश इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

यथाक्रमानुलोम्यन्तु प्रातिलोम्यञ्च विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तच्च ब्रह्मचारि-गृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्वपूर्वाश्रमानाश्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति वचनमविवक्षितं स्यात् ।

कूर्मपुराणे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥
वानप्रस्थाश्रमङ्गत्वा न गृहं प्रविशेत्पुनः ।
न सन्यासी वने वासं ब्रह्मचर्याञ्च साधकः ॥

पुराणात् ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
अप्रमत्तो द्विजातेन मार्गाः पुत्र कुवर्त्मना ॥

आपस्तम्बः।

चत्वार आश्रमा गार्हस्थमाचार्य्यकुलवासः संन्यासोवानप्रस्थमिति। तेषु सर्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति, तेषु सर्वेषु वर्त्तमान इति समुच्चयोदर्शितः ।

जावालश्रुतिश्च चतुर्णां त्रयाणां द्वयोर्वा समुच्चय इत्याह ।

ब्रह्मचर्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति ।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः ।

चतुर्थमायुषोभागमुषित्वा ब्रगुरोर्द्विजः ।

द्वितीयमायुषोभागं कृतदारोवसेद्गृहे ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि ।

गौतमस्तु विकल्पमाह ।

तस्याश्रमविकल्पमेके ब्रुवते ।

अयन्तु विकल्पोव्रतचर्याश्रमव्यतिरिक्तविषयः ।

वसिष्ठः ।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्यमिच्छेत्तमाविशेत् ।

वेदान् वेदौ वेति पक्षौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः ।

वामनपुराणे ।

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ॥
वैखानसोवाथ भवेत्परिव्राड़थ वेच्छया ।
गुरवे तु वरं दत्त्वा यायाद्गुर्वनुमोदितः ।
गृहं वनं वोपवसेद्व्रजेद्वापि द्विजोत्तमः ॥

उशनाः ।

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं ।

आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

अयञ्च विकल्पः समुच्चयानुष्ठानरहितानां वेदितव्यः ।

इत्याश्रमकालनिर्णयः ।

---

## अथोद्वाहविकल्पः ।

तत्र बृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽप्लुतव्रतः ।
समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥
गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥
वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः ॥

अत्र नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाद्युपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादि-मोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्धं स्नातो गृही भवेत् ॥
अनधीत्य द्विजोवेदान् स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण यावद् वेदं गुरोर्गृहे ॥

युग्मेऽब्दे सम्प्रदा विद्या-धर्म-कामायुषां सदा।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या त्वसंशयम्॥
माघमासे भवेदूढ़ा कन्या सौभाग्यसंयुता।
फाल्गुनोढ़ा भवेत्साध्वी वैशाखे पुत्त्रिणी भवेत्॥
धर्मयुक्ता भवेज्ज्यैष्ठे धनिनी कार्त्तिके भवेत्।
देवपूजारता नित्यं मासे स्यात् सोमदैवते॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि।
विवाहं कन्यका पूर्व स्यात् सुत-सौभाग्यवर्जिता॥
सितपक्षे तु यस्यास्या प्रकाशयति सा कुलम्।
कन्योढ़ा त्वसितास्ये च अशेषे चेन्निदर्शना(१)॥

तथा।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं।

वशिष्ठः।

आपूर्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते॥

व्यासः।

उपायनोपरिक्तासु तिथिषु स्यादमर्हिता।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता॥

तथा।

कल्याणभाविता प्रीतिः सौभाग्यं धनसंचयः।

---

(१) पाठोऽयं चादर्शपुस्तकोपलब्धितः परमयं न समीचीनः।

सुखार्थी बहुविघ्नानि शोक-सौख्यप्रकीर्त्तयः ॥
शोकामयौ सुदः सौख्यं भाग्यमेवात्मजादयः ।
उपद्रवाः पूर्णफलं शुक्ले प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुसारिणी ॥
अर्क-तत्पुत्र-भौमानां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
अष्टवर्गगतोऽनिष्टस्थानप्राप्तशुभग्रहः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यद्यस्य दिवसे प्रोक्तं ग्रहस्य सदसत्फलं ।
तदशेषं तदीयायां होरायामपि निर्द्दिशेत् ॥
प्रशस्तं जन्मताराश्च केचिदाहुस्तथापरे ।
हितारं जन्मनक्षत्रे त्यक्ता शेषां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तद्विलग्नगे ।
तद्वर्गेऽपि भवेत्कालं होरायान्तु विशेषतः ॥
आदित्याद्यन्यवारेषु चतोरर्कायनस्य च ।
समयोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां समये यदिहोदितं ।
तस्मात्सर्वयनाब्देषु सदेवाविकलं भवेत् ॥

---

(१) त्यक्ता शेषां इत्ययं पाठो न समीचीनः ।

तिर्यक्‌पञ्चोर्ध्वगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्कुरेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यन्नस्मिन्नेकरेखास्थितं ग्रहं।
नक्षत्रमनुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्वं ब्राह्म-नैर्ऋतदैवतं।
अहिर्बुध्न्यार्यमा वापि पौष्ण-धातृ-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते।
रेवत्यर्क्षचतुर्भागे विवाहः प्राणनाशनः।
स्वाम्यजेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
त्यजेद्विषुवतं चन्द्राद्युतीपातायनं तथा।
उत्पातदूषितञ्चर्क्षं वैधृतिञ्च विशेषतः॥

वात्स्यः।

सावित्र्यामिलसंयुक्तान् मुहूर्त्तानपि निर्द्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत्॥
मुहूर्त्तेष्वभिजिद्दर्शं शुद्धाहे कालचिन्तकः।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञितः क्षणः॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः।
उपग्रहोदयाद्यैश्च पापैस्तैर्न हि बध्यते॥

तथा।

वैवाहिकर्क्षदैवत्यमुहूर्त्तेष्वपि जायते।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः॥

वैधव्यन्दिनबान्धवस्य जगतीसूनोरपत्यक्षयः
सौम्यस्यार्थपरिच्युतिः सुरगुरोर्दास्यं तथा दुःखिता
प्राव्रज्यं भृगुनन्दिनः सुतिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वेधाद्वधः॥

सारावल्यां।

सर्वेऽप्यनुकूलाः शशि-सूर्यौ नैव गोचरविशुद्धौ।
अप्यूढ़ा शक्रधूर्य्यमस्य धनदस्य वा कुलटा॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ।
वर्जयेत्सर्वकर्माणि व्रत-स्वस्त्ययनानि वा॥

गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव।
न चाष्टमे शीतकरे च कुर्याद्-
रवौ वराद्वैधनगे प्रयत्नात्॥

ग्रहणदयमध्यस्थं ग्रहणादौ सप्तरात्रमपि त्यक्तं।
यात्रा-विवाहसमयं मनसापि न चिन्तयेत् प्राज्ञः॥

व्रतबन्धं द्विजातीनां उद्वाहं सुन्दरीषु च।
गुरावस्तमिते नित्यं न कुर्याद्भार्गवे तथा॥

विवाहमपि नेच्छन्ति मुनयः काश्यपादयः ।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः ।
तथा सिंहगते जीवे विवाहे बादरायणः ॥

वशिष्ठः ।

विवाहे व्रतबन्धे च यात्रायां व्रतकर्म्मणि ।
गुरावस्तमिते शुक्रे जातस्य परिणीयते ॥
गुरुर्नष्टः पतिं हन्यात्कुजोनष्टस्तु कन्यकां ।
चन्द्रे नष्ट उभौ हन्ति विवाहे तौ विवर्जयेत् ॥
पश्चादभ्युदितोबालो दशाहं प्राग्दिनत्रयं ।
पचं वृद्धस्तु पूर्व्वेण पश्चाहं पश्चिमे सितः ॥
विचित्तमुपयाति माघमन्त-प्रतापौ दक्षिणे त्वयने ।

वराहः ।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थितिः सैव कार्या ।
लोके दुष्टं पण्डिता वर्जयन्ति
दैवज्ञोऽलोकमार्गेण यायात् ॥
वृहस्पतौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः ।
रवौ शुभस्थे च वदन्ति गौडाः
न गोचरोमालवके प्रमाणं ॥
गौडाः सूर्य्यबलं प्राहुर्दाक्षिणात्या गुरोर्बलं ।
मालवा लग्नमिच्छन्ति लाढानां लग्नबलं ॥

तारावलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः।
तथोत्तरामौकुलयन्निजष्टाः
माण्डव्य-तित्तीर-तुषारकेषु॥
ग्रहर्क्ष-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः।
वङ्गेषु तत्प्रोक्तफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः॥

सारावल्यां।

षष्ठोविलग्नाद्रविरष्टमो वा
भागो मुहूर्त्तो यदि युज्यते च।
सूर्येन्दु-तारावलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदायी॥

लग्नशुद्धिर्यदा न स्याद्यौवनन्तु प्रशस्यते।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः॥
राशिर्न ज्ञायते यत्र नापि लग्नस्य निश्चयः।
लग्ने सूर्यावली यस्मिन् तत्र सर्वं प्रशस्यते॥
सौरश्चैकबलोज्ञेयो माहेयोद्विबलः स्मृतः।
त्रिवलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः॥
शुक्रः पञ्चबलोज्ञेयश्चन्द्रः षड्बल उच्यते।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः॥
यात्रा विवाहकालेषु कार्येषु विविधेषु च।

यत्र सूर्य्यबलं नास्ति नास्ति सर्वं ततोबलं ॥
पुंसामर्कः स्मृतो योनिर्योषितामम्टतद्युतिः ।
अतोनृ-योषितोराप्तं बलं चन्द्र-प्रभाकृतं ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषास्तत्र प्रलीयन्ते यदि स्युः सर्वतोऽपगाः ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
सिंहे च भगदैवत्ये गुरौ पुत्त्रवती भवेत् ।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

वात्स्यायनः ।

पञ्च-तिथि-वार-करण-क्षणेन्दर्क्षे लग्न-ताराभ्यः ।
पाणिग्रहणे योज्यास्तत्त्वविदेकादशपदार्थाः ॥

विवाहकर्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि ।
एतावत्र गतानान्तु माण्डव्याद्या महर्षयः ॥

सिंहस्थिते सुरगुरावधिमासके च
ज्यैष्ठे तथाद्यतनुजस्य तथा सुतायाः ।
कुर्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मक्षयोश्च निखिलान्यपि मङ्गलानि ॥

रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन म्रियते चोरैः शुक्रे पापं समाचरेत् ॥

रहस्यनिपुणा सौम्ये त्यक्तलज्जा रतिप्रिया ।
पतिमन्यं व्रजेत्क्षिप्रं केतुचन्द्रसमाश्रिते ॥
गुरुचन्द्रस्य आश्रिते तिष्ठेद्यदि समाश्रितः ।
धन-सौभाग्य-पुत्रांश्च लभते नात्र संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता श्रेष्ठा गुरुणा यदि वीक्ष्यते ॥
सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सङ्गमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
दृष्टे चन्द्रे च भौमे च न कुर्य्याद् याभिग्रायनं[१] ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वशिष्ठः ।

मरणं चाग्निमन्तीनं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यूरवि-रक्तार्कि-भार्गवाः ॥
नैपुण्यं कुलपूज्यत्वं पौंश्चल्यं व्याधिमेव च ।
बुध-जीवयुताः कुर्य्युः कर्त्तुश्चैव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा ग्रहणैः सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
प्रव्रज्यासहजने नारी नैरिकाम्बरधारिता ।
विदेशं वा व्रजेच्च सौम्यैश्चैव युतः शशी ॥
लग्नानां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा मेषवियुग्मास्तु विवाहे मध्यमाः स्मृताः ॥

(१) न कुर्य्यादाभिवायनमिति क० ।

अन्ये द्विचतुरादीनामंशा ग्राह्या मनीषिभिः ।
युग्म-कन्या-तुलायास्तु न स्वांशो न परांशकः ॥
सुहृदः सौम्यषड्वर्गाः स्वस्वसौम्यनिरीक्षितः ।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि ॥
प्राशस्त्यं कुरुते जारं शुक्र-जीवसमागमे ।
जीव-भास्करयोः ख्यातं शतस्त्वं कुरुते पतिं ॥
देवेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा ।
करोति तस्करं जारं कन्या नैवात्र संशयः ॥
विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽन्यांशे यद्येवं योषितस्ततः ॥
द्वादश-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रस्य ।
दृश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥

व्यासः ।

मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनश्च प्रदृश्यते ॥
कन्या-तुलासु मेषेषु सम्प्रेक्ष्यान्यांशके न तु ।
अतोऽन्यके फलं कृत्स्नं वदतो मे निशामय ॥
तेषां कर्कटकन्यान्यकुमारगतमानसा ।
हता वृषभगे चाथ युग्मांशे शीलसंयुता ॥
वेश्या कुलीरभागे स्यात् तीक्ष्णेषा तथैव च ।
बहुल्पप्रसवा सिंहांशे पितृवेश्मरता तथा ॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका ।

चधार्म्मिता तुलस्थांशे दुःशीला मकरूपिता ॥
वेश्या कुम्भकुलीत्यंशे हर्षिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-वृषांशके ।
सुदृश्या सन्ध्यजा स्यात् कन्या नात्र संशयः ॥

गर्गः ।

अधिमासक्षतान्दीपान्तुपचयलोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश यान् ॥
यत्नवृष्टिं दुराधर्षां द्वेष्काणांशकराशिजान् ।
गुरु-शुक्रबुधाश्चन्ति लग्ने सम्यग्व्यवस्थिताः ॥

आचार्य्यः ।

लग्नराशियुक्ते आमित्रगतश्च वर्जितोराहुः ।
लग्नस्थे वैधव्यं आमित्रगते च कन्यकामरणम् ॥
राशियुक्ते प्रव्रज्यास्ता न चितये सदा वर्ज्यः ।
प्रात्स्थगे मृत्युः स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्योऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याच्छत्रुवृद्धिस्तथाष्टमे ॥
आमित्रस्थे च वैधव्यं मायुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययोद्वादशगे भवेत् ।
चन्द्रे व्ययप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी वश्यौ बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायाले सपत्नी स्यान्मृत्योर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्मे विकारस्त्वारकर्मणि ॥
भर्तृप्रियोपयुक्ता च शशिन्येकादशस्थिते ।
वर्गाणी द्वादशे च स्यात् कन्यका शीतदा शनौ ॥
अनिष्टग्रहणं याती प्रशस्तफलदः शशी ।
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्बलीयसा ॥
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अग्नि-चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदृष्टा चतुर्थगे ।
पुत्त्रहीना सुतस्थे स्यादरिगे सुतभागिनी ॥
सप्तमस्थे महीपुत्रे पुंश्चली बलसंयुता ।
असृक्स्रावं धरासूनौ पुत्त्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्तृविद्विष्टा दशमे कुहकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्त्रे स्याद्धर्मज्ञा सुप्रजा स्थिरा(१) ।
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्त्रा सुतस्थे स्याद्धतशत्रुस्तथारिगे ।
कष्टामापदमाप्नोति पुत्त्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

(१) स्थितेति ख० ।

तपोरता धर्मगे स्यान्मायाशीला च कर्मगा ॥
सुत-भृत्य-धनोपेता भौमे द्वादशगे भवेत् ।
कन्या सद्व्ययसंयुक्ता शशाङ्कतनये सदा ॥
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधनं निधने भवेत् ॥
अतिप्रमुदिता जीवे द्वितीयस्थे भवेत्सदा ।
सबन्धुवृद्धिं जानीयात् सर्वकामगुणान्विताम् ॥
सुशीलस्था चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुभूला स्ववेश्मनि ॥
विरूपा दुर्भगा स्वार्था व्यनक्ति विमलं यशः ।
सुतकर्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ॥
विचित्रमाल्याभरणा पुत्रयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ।
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
प्रभूतगुणयुक्ता स्यात्तापणा च धनाश्रिते ।
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराज्या षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ॥
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे सद्धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
विधवार्थान्विता त्याज्या भवत्येकादशे भृगौ ॥
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
शौरे लग्नगते कन्या पुंश्चली दुर्भगा कृशा ॥
निर्धना कृपणा दीना धर्मस्थार्कात्मजे भवेत् ।
पुनर्दीनार्त्तिदुःखार्त्ता हृद्रोगेण च पीडिता ॥
पञ्चमस्थे सुपुत्रा स्यात् षष्ठस्थे रतमापणा ।
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मव्रता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थस्य मृत्यु-वैधव्यकृद्भवेत् ।
राहुर्गेहेष्वथान्येषु निष्फलः स्यादुपचितः ॥
पञ्च पाणिग्रहे दोषान् वर्जयेदेव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौंश्चल्यमनपत्यताम् ॥
अष्टमाषाढमाघासु तीर्थे वार्थे शुभाशुभाः ।
लग्नस्थ पञ्चमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्यो विवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मजद्यूनत्रिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विलग्नगे ॥
त्यक्त्वा च मघ-मेघनानि तु सदा सौम्यपदाः सशुभं
सोमसूर्यासुरपूजितः प्रमथरोहुविम्बलाभार्थगः ।

पापस्य ×××× चन्द्रभवनं प्राप्ता क्षितेर्नन्दनं
भुक्ता नैव भवेत् स वर्त्तिगमयो पाणिग्रहेऽभिहिता(१) ॥
यो जन्मनि जन्मलग्नादष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥
शौनकः ।

पञ्चभिरिष्टं रिष्टञ्च पुष्टमनिष्टमादेयं ।
स्थानादिबलसमेतैश्चतुर्भिरपि खचरैः ॥

अर्केऽनुकूले सुरपूजिते च
शशिं प्रबले भृगुनन्दने च ।
भवन्ति नार्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः सततप्रसन्नाः ॥
पक्षान्ते सूर्यविधूमर्दे
शृङ्गाटके धूमशिखे द्रुमे च ।
उपप्लवप्रापिणि चक्रबन्धे
प्राप्ते च पापान्तरगे च चन्द्रे ॥
अस्तङ्गतयोर्वा परिवेषिणोर्वा
पाणिग्रहः खण्डितबिम्बयोर्वा ।
शीतोष्णभासोर्विपरीतखेट-
कबन्धकापालिकयोर्निरस्तः ॥

पराशरः ।

दृग्पातशूलकपाले समपनवृत्ते पञ्चक्रोशोत्सेधे ।

(१) श्लोकोऽयं यावदशुद्धरूप एव मुद्रितः परमयं न समीचीनो भाति ।

द्वादशमुखपरिणाहे जलपलषष्टिप्रपूरणी घटिका ॥

वात्स्यः ।

ताम्रपात्रं पिबच्छिद्रं पञ्चकृष्णलमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

वात्स्यः ।

कच्छनदद्दलमयवाङ्कुरमण्डपमुद्वेदिवर्णकाद्यखिलं ।
तत्सम्बन्धिगतागतमुद्वाहे वैवाहिके कुर्यात् ॥
वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।
आमिषराशौ कन्याया लग्ने शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र बृहस्पतिः ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीसङ्गरीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजःस्त्रीणां प्रवर्त्तते ।
यस्यां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षोदशाब्दान्तु भार्य्यां विन्दति नग्निकां ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥

इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अथ 'वृषली' रजस्वला ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

वृद्धव्यासिरपि।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥

विष्णुः।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
सा भवेत् वृषली ज्ञेया परंस्ताञ्च न दुष्यति॥

एतच्च प्रायिकं, कासाञ्चिदर्वागेव रजोदर्शनात्।

अतएव यमः।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला॥

यत्पुनर्यम-पराशरापस्तम्बैरुक्तं।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितं॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते॥

एतदपि प्रायिकं, कासाञ्चित्तत्रापि रजोदर्शनाभावात्।

अतएवाह मनुः।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥

एवञ्च रजोदर्शनात्पूर्वं विवाह इत्युक्तं भवति।

तथाच गौतमः।

प्रदानामप्रदानामृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके।

यमः ।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

वशिष्ठः ।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

संग्रहे ।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः ।

यावद्दोषं न जानाति तावद्भवति नग्निका ॥

अमरसिंहः ।

नग्निकानागतार्त्तवेति ।

अङ्गिराः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

व्यञ्जना तु या प्रोक्ता कुचहीना तु नग्निका ॥

व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते तु कन्यकां ।

पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलां ॥

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

बृहस्पतिः ।

व्यञ्जने तु कुचं हन्यात्पितृन् हन्यात् पयोधरे ।

हन्यादिष्टञ्च पूर्त्तञ्च मासि रजसि कन्यका ॥

पराशरः ।

माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च ।

त्रयोऽपि[१] नरकं यान्ति दृष्ट्वा कन्यां रजस्वलां॥

पैठीनसिः।

यावन्नोन्नतौ स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया।

याज्ञवल्क्यः।

अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ।

नारदः।

यावन्तश्चर्तवस्तस्याः समीयुः पतिना विना।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति तां॥

यत्पुनर्मनुनोक्तं।

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि।
न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित्॥

तद्गुणवति सम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुणहीननिषेधार्थं।

यत आह यमः।

दद्याद्गुणवते कन्यां नग्निकामेव ब्रह्मितः।
न त्वेव गुणहीनाय नोपरुन्ध्याद्रजस्वलां॥

इति देयकन्याकालनिर्णयः।

---

(१) त्रयस्ते इति ग०।

## अथ स्वयम्वरकालनिर्णयः ।

यमः ।

कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयं ॥

मनुरपि ।

त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती ।
ऊर्द्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिं ।
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयं ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थः ।

बौधायनः ।

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

'सदृशे' गुणवति ।

वशिष्ठः ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्द्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यं ।

यत्तु गौतमेनोक्तं ।

त्रीनृतूनतीत्य स्वयं युज्यते ।

यच्च विष्णुनोक्तं ।

ऋतुत्रयमुपासीव कन्या कुर्यात्स्वयम्वरं ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥

तदृतुत्रयादर्वाङ्निषेधपरं, यदा तु न वर्षत्रयमध्यात्तुमत्यं तदा ऋतुत्रयादूर्ध्वमपि वरयेत्।

कात्यायनः।

वरयित्वा तु यः कश्चित्प्रणश्येत् पुरुषो यदा।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिं॥

'रक्तागमान्' ऋतून्।

नारदः।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरं॥

'प्रतिगृह्य' वरयित्वा।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्बरविधायकं पूर्वोदाहृतविष्णु-गौतम-नारद-कात्यायनवचनसमानार्थत्वेन व्याचक्षते, तदयुक्तं। तत्र हि पितुरदानं प्रकृतं न तु वरयितुर्देशान्तरगमनं मरणं वा तस्मात् क्रमानुरोधात्पूर्वैव व्याख्या श्रेयसी। यदा तु नैवं कश्चित्सा कन्या रागात् नमात्रजेत्, ऋतुत्रया तत्र वरं परीक्ष्य वरयेत् स्वयं, कश्चि-द्दाता क्षत्रेषु मध्ये।

याज्ञवल्क्यः।

गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्बरं।

'गम्यं' गमनार्हं।

इति स्वयम्बरकालनिर्णयः।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैवं ततः सम्यक् तृतीयं त्वाश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थे त्वायुषः शेषं प्रमथित्वा व्रमं व्रजेत् ।
वैश्व-सोम-मथाश्वाप्य वानप्रस्थोमुनिस्ततः ॥
आश्रमादाश्रमं यश्च पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण सुसमाहितः ॥
वानप्रस्थं समास्थाय चतुर्थाश्रममभ्यगात् ।
वने चरन्निवर्त्यैव(१) तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषश्च निवर्त्तते तावदिवक्षितः, न हि सुखस्तृतीयः कालो न यावति च वयसि मद्वापेयः तदा तदा संवेयते तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षावलिपरिश्रान्तः प्रव्रजेत्प्रेत्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा ब्रह्मचर्याश्रम-वानप्रस्थाश्रमौ कृत्वो-भयपाकस्कालुष्ठानेन जितेन्द्रियः तदा प्रव्रजन्नर्हति इति पूर्वाश्रम-धर्मानुवादः ।

मार्कण्डेयपुराणे ।

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितृंस्तथा ।

(१) वनेष्वनुविहृत्यैवेति ख० ।

भ्रताहीनश्च कथं मौख्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः।
ऋणानि त्रीण्यपाकृत्य इष्टा यज्ञैश्च संन्यसेत्॥
गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः।
अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात् ॥

ब्रह्मवैवर्त्ते।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः।
राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः॥

मनुः।

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्टा तु शक्तितो यज्ञैर्मनोमोक्षे निवेशयेत्॥
अनधीत्य द्विजोवेदं अनुत्पाद्य तथात्मजान्।
अनिष्टा चैव यज्ञैस्तु मोक्षमिच्छन् व्रजत्यधः॥

समुच्चयपक्षमित्येतत्पक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदिति प्रत्यक्षश्रावाक्श्रुतिविरोधः स्यात्।· "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एष वा अनुणोयः पुत्री यज्ञी ब्रह्मचारी वासीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपक्षाश्रयमेव।

मनु-सिद्धौ।

वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाग्नि-मात्मन्यारोप्य व्यपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलुषशोधितवेदनावच्छिन्नमनसः ब्रह्मायणियतं भवति तस्माच्छद्-दहरेवोपासीत यदहरेव संन्यसेत् सर्वारम्भपरिग्रहानुत्सृज्य।

विष्णुपुराणात्।

पुत्र-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः॥
दिवा द्विधे च भोगे तु विषये पञ्चलक्षणे।
तृष्णानुभाविते चैव विरक्तः संन्यसेद्वनात्॥

कूर्मपुराणे।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मवत्तमाः।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः॥
आराध्य तपसा देवं योगिनं परमेश्वरम्।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान्॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकं।
व्याधिदिष्टोविरक्तो वा नातुरोवाथ दुःखितः॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया।
प्रैषमात्रस्तु सन्न्यास आतुराणां विधीयते॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे।

भयभीतस्य सन्न्यासं अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ।
यथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तथा ।
अकर्त्तुमसमर्थोऽपि जुहोति यजतिक्रियाः ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेत् द्विजः ।
सर्वेषामेव वैराग्यं जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥

यमः ।

चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत् ।
समः सर्वेषु भूतेषु कृतकृत्यः परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं पन्थानमाश्रयेत् ॥

कूर्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
यत् व्रजेत् ब्रह्मचर्यादौ यदीच्छेत्परमां गतिं ॥
दारानाहृत्य विधिवद्यथावद्विविधैर्मखैः ।
यजेदुत्पादयेत्ततो विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजं ।
न गार्हस्थ्यं गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वाननिर्विद्य विचारयेत् ॥

प्रथमाद्वाश्रमाद्वापि विरक्तो भवसागरात्।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥
अथ तृतीयं समाप्य गृहस्थाश्रममुत्तमं।
चतुर्थमायुषोभागं तत्स्थो वापि परिव्रजेत्॥

इति चतुर्थाश्रमकालनिर्णयः।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

तत्र मनु-शातातपौ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

स च सोदरोभ्राता नान्यजो नान्यमातृजः। एतद्देवोत्तरत्र स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-बधिर-मूक-जड़-कुब्ज-कुष्ठि-श्वित्रि-राजयक्ष्मोदरायसाध्यमहारोगाभिभूत-नास्तिक-शास्त्रयोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं। एतेषां परिणयाद्यावधिकारस्याविद्यमानत्वात्।

अत एव छन्दोगपरिशिष्टे कात्यायनः।

देशान्तरस्थ-क्लीवैकवृषणांश्च सहोदरान्।
वेश्याभिसक्तांश्च पतित-शूद्रतुल्यातिरोगिणः॥
जड़-मूकान्ध-बधिर-कुब्ज-वामन-कुण्ठकान्।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुलटोन्मत्त-चोरांश्च परिविन्दन्न दुष्यति॥

शातातपः ।

क्लीबे देशान्तरस्थे वा पतिते प्रव्रजिते तथा[1] ।

योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

सुमन्तुः ।

व्यसनासक्तचित्तो वा नास्तिको वाथ वाग्रजः ।

कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥

पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा ।

दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

यम-वाक्यशे ।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ।

इति पाठः। 'परनारीसुतान्' इत्त-क्रीतकादिभ्रातॄन् ।

वशिष्ठः ।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्राय-श्चित्ती भवति,

अनिविष्टं मायोदरे, भवन्ति चात्र श्लोकाः ।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।

न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीव एव वा ।

राजयक्ष्मादियुक्तश्च न न्याय्यः स्यात् प्रतीक्षितुं ॥

षण्ढ-वामन-कुब्जान्ध-पतितोन्मत्त-कुण्डकान् ।

(१) पतिते व्रजिते तथेति पाठे नाक्षराधिक्यदोषो भवितुमर्हतीति विभावनीयं ।

रोगि-बधिर-मूकेषु न दोषः परिवेदने ॥

सुमन्तुः ।

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा वृद्धवसिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।

अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिण्यपि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि व्यतिक्रमाभावान्न तदनुज्ञापनं युज्यते ।

अतएव हारीतः ।

सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत् ।

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽग्रजेऽधिकारिण्यपि अकृतविवाहे विवाहमीहमाने अग्निहितेऽवतिष्ठति तदनुज्ञां गृहीताधानवद्विवाहो न कदाचनापि कर्त्तव्यः।

यद्वाहोमनाः ।

पिता पितामहो यस्य नाप्यजीवाय कथञ्चित् ।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य तु नाधीतं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अथाप्यनुज्ञाते स्थिते वा शातातपः ।

अग्रजः परिविन्दन्ति कनिष्ठस्य या च कन्या विरूपिका।

इत्यत्राधिकाररहिते भ्रातरीति पूर्ववचनादनिष्टरूपा ज्येष्ठापि सती न कनिष्ठाया विवाहविघ्नहेतुर्भवितु मर्हतीति।

इत्यग्निहोत्राधान-दारसंस्कारकालनिर्णयः।

---

## आवसथ्याधानकालनिर्णयः।

तत्र याज्ञवल्क्यः।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते॥

अत्र मेधातिथिः।

दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति शब्दप्रवृत्तेरन्यनिमित्तकत्वादिति तदयुक्तं अन्यनिवृत्तेर-प्राम्नानात्।

अतएवाह गार्ग्यः।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहं।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत्॥

महागर्गोऽपि।

याजनाध्यापनेनैव अग्निसम्बोधनेन च।
उपासनं समादद्यात् स्वकाले परिवेदनम्॥

'स्वकाले' यथाविहितकाले।

तथाच स्मृतिः ।

आधानं विधिवद्वैश्यस्त्वध्ययनादथापि वा ।

महानवाहरयोर्वा दार-दायादकालयोः ॥

पारस्करः ।

आवसथ्याधानं दारकाले दायादकाले एकेषां ।

गौतमः ।

पुत्रमुत्पाद्यावसथ्याधानं ज्ञातियोन् संपूजयेत् ।

व्यासः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।

पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥

यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

ज्येष्ठस्याधिकारित्व एतद्रूपं कनीयांस ज्ञाताग्निलोपेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनाध्यापकौ नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन सह संयुज्यते ।

अत्र गर्गः ।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः ।

ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अनधीतवेदस्यापि समाहृतविवाहः सत्यव्रतेन दर्शितः ।

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।

अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इत्यावसथ्याधानकालनिर्णयः ।

## अथाग्निहोत्रकालः।

तत्र कात्यायनः।

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥
रात्रेस्तु षोड़शे भागे ग्रह-नक्षत्रभूषिते।
कालं त्वनुदितं ज्ञात्वा होमं कुर्य्याद्विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं प्रदृश्येत रश्मिभिश्च समन्वितः।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥

मनुः।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

बौधायनः।

आसायं कर्मणः प्रातरा प्रातः सायकर्मणः।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात्॥

बौधायनीयपरिशिष्टे।

अथयोर्ह्य प्राणानकाः आवर्त्ते अग्निहोत्रिणां पक्षान्ते समस्त-होमानपाक्ष तथा दिरात्रीय-मन्त्राभ्यो दिमासाद्दुमासायाग्निहोत्र-मजुहुवुत्सामासावेर आमयाव्यातीवार्धमासायाग्निहोत्रं जुहुयात् उपवेषेऽहनि प्रातःसायं चतुर्द्दश चतुर्द्दशहोतानि प्रातश्चतुर्द्दश[१]।

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्त्वयं न समीचीन प्रति-भाति।

चतुर्हंग्रयचप्तमुपलक्षणार्थं, कदाचित् पञ्चद्शापि भवन्ति कदा-चिच्चतुर्विंशतितानि कदाचित् षोड़शानि ।

मरीचिः ।

पञ्चहोमानथोद्धृत्य गत्वा कस्माच्चिवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा सदा भवनमाचरेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैव च ।
आषाढ़े भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाशं आश्विने स्यात्कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणं ।

लाभश्च बहवो विन्द्यादग्निं माघे विनिर्द्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्म्ममते ।

चैत्रे शोकाकुलोभर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः स्याच्छुभे न भवेद्गृही ।

कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।

'सहस्यः' पौषः ।

माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥

तथा वसिष्ठे ।

व्याधिः शोकोभवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्येष्ठे मृत्युमवाप्नोति आषाढे पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभस्तु धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखदं जायते ध्रुवम् ॥
तत्र सर्वसहानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके चातुलं धान्यं भृत्यनाशोऽप्यनर्गलम् ।
अत एव प्रशस्यन्ते प्रासादारम्भणे स्मृताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविधं तत्र वस्त्रपादिसुरत्नकम् ॥
वास्तुलाभः शुभश्चात्र प्रजालाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परोभवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सुदारुणा ।
धन-धान्यादिलाभः स्यात् पुत्र-मित्रादिसम्पदः ॥
माघे वह्निभयं ज्ञेयं सर्वसन्तापकारका ।

फाल्गुने चैव विज्ञेयो लाभः काञ्चनजः शुभः॥
पुत्रलाभो महांश्च सुख-सौभाग्यसंयुतः।
इति मासफलं प्रोक्तं त्रैविध्यमधुना ब्रुवे।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने।
उत्तमास्ते समाख्याताः कथ्यन्ते मध्यमास्तथा।
आषाढ़े कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिताः॥
कनिष्ठांस्तान् समाख्यास्ये निम्नामय समासतः।
चैत्रो ज्येष्ठो नभस्यः स्युरीषोमाघाः कनिष्ठकाः॥

'ईशः' आश्विनः।

फलमेषां समासेन कथितं तत्परिस्फुटम्।

अपराजितपृच्छायाम्।

रवौ कन्या-तुलालिस्थे वास्तौ पूर्वे शिरः स्थितम्।

'अलिः' वृश्चिकः।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम्।
आदित्यवारयोगेन स वास्तुः चरति क्रमात्॥
यत्र भानुः शिरस्तत्र ज्ञातव्यं रविक्रमात्।
देवागारं मठञ्चैव न कुर्यात्कीर्त्तिसम्मुखम्॥
मृत्युरोगभयानि स्युः प्रश्नस्तं कुक्षिसम्मुखम्।
तुला-वृश्चिक-कन्यासु भास्करो यदि संस्थितः॥
न तदा प्राङ्मुखं कुर्यात् मठं भवति निष्फलम्॥
धनुर्मकर-कुम्भेषु यदा तिष्ठति भास्करः।

तदा याम्यमुखं वेश्म राज-चौराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं शोककलहावहम्।
मिथुने कर्कटे सिंहे न कुर्य्याच्चोत्तराननम्।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्म्मा।

रवौ कन्या-तुलासिस्थे गृहं वारुणदिङ्मुखम्।
न कुर्य्यात्तद्धि शून्यं स्यात् च गृही भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ।
तद्गृहं वह्निशुद्रराजचौरादिकृद्यतः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम्।
कुर्य्यात्तद्धि दरिद्रत्वं दद्यात् सर्पदोषताम् ॥

विश्वकर्म्मप्रोक्ते।

अधुना कुम्भचोरकं रविचक्रायुधं भुवम्।
रेखाद्वयं प्रकर्त्तव्यं तत्र वै पूर्वपश्चिमम् ॥
दक्षिणोत्तरगन्तव्यं रेखा वह्नि-वायुगा।
ईश-नैर्ऋतगा रेखा तत्र राशींस्तु विन्यसेत् ॥
क्रमाद्दीप्तानरेखाया रेखाद्वादशकं भवेत्।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम्।
तत्स्थानात् सप्तमे राशौ वास्तोर्दृष्टिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्यो वास्तुमस्तकसंयुतः ।
तद्रेखायपितं राशिं संमुखश्चैव दूषयेत् ॥
रविदृष्टिगतं राशिं जानीयात्त्वभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्धः प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
यद्यज्ञानात्कृते तस्मिन् क्षयं स्याद्गृहमेधिनः ॥
वास्तुदृष्टिस्थिते राशौ यद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्र-मित्र-पशुक्षयः ॥
रविरेखापदे राशौ कृते रोगभयं भवेत् ।
रोग-चोरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ यद्द्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दुःखं सुदारुणम् ॥
दग्धे द्वारे कृते नाशः कर्त्तुः स्याद्धनक्षयः ।
मकरस्थे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च तदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्गेहं मनुष्यार्थी कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
बन्धुनाशस्तथा तत्त्वं नक्षात्रे फलमीदृशम् ।
अरिजश्चोपद्रवश्चैव पांशुभिश्च ततो व्ययो ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्वसाक्षि च ।
पुत्राः पौत्राः प्रवर्द्धन्ते लक्ष्मीरविचला भवेत् ॥
शूरश्च द्युतिमान्भर्त्ता पुत्र-सौभाग्यसंयुतः ।
सिंहे सविकलं सर्वमेवमादि फलं भवेत् ॥
हृष्टः पुष्टः सुसम्पन्नो बहुगात्रः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्कें च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उद्गास्यं व्रतश्चैव प्रेतद्वारं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमत्र वदाम्यहम् ।
शुभलक्ष्मीफलं सौम्यं पुत्र-पौत्रसमुद्भवे ॥
मधुभाषी भवेन्नूनं सर्वसौभाग्यसंयुतः ।
एवमादि फलं मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौम्यं चिरा लक्ष्मीः पद्महस्तिरथाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनाः स्त्रियः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुखं भोगो गोऽश्व-पुत्रसमुद्भवः ।
बहुमित्रास्तथा भृत्याः पशवः शोभना गृहे ॥
पुत्रदारास्तथा भर्त्तुस्तुलायामीदृशं फलम् ।
चिरता बन्धुषः सम्यक् स्वकुले वृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता चारुतमान्वितः ।
एवमादि फलं तत्र वृश्चिके जायते ध्रुवम् ॥

नक्र-कुम्भौ प्रतिज्ञेयौ प्रकाश्ये मन्दिरे स्थितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मनः ॥

'हरिः' सिंहः ।

मेषोवृषस्तथा चैतौ सौम्यागारमुखे स्थितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्यामुभौ स्थितौ ॥
कोणस्थानामथोवक्ष्ये कन्यादीनां फलं यथा ।
यतः कन्यास्थितोध्वाङ्क्षो धनुर्धूमसमाश्रयात् ॥
ग्रुणि मीन-खरे चैव मिथुनं सर्वदा स्थितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृहं सुधीः ॥
न चाद्रिस्तत्र जायेत पुत्र-पौत्रपशुक्षयः ।
सर्वदार्त्तियुतोभर्त्ता वसेद्यत्र न संशयः ॥
धनुःस्थिते रवौ कार्यं नैव गेहं कदाचन ।
शत्रुभिर्बाध्यते तत्र जायन्ते हि न सम्पदः ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ॥
हतबेद्याधिशोकाय भयाय विपुलाय च ।
अधीरत्वं तदा तस्य स्वामिनः सम्प्रीणतः फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते तद्वै वेश्म दुःखप्रदं सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने नाव्यथारम्भ ईशे वह्न्यार्थिनां हितः ॥
वायव्ये कन्यका श्रेष्ठा गृहारम्भः सुखप्रदः ।

स्वरोपजीविनां चैव वेश्यादीनां सदैव हि ॥
नैर्ऋत्यां कार्मुके च आदारम्भः सपत्नां गृहे ।
इदानीं कथये वेश्म राशि-मासक्रमागमम् ॥
चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।
कृते व्याधिर्भवत्यत्र जायते गृहमेधिनाम् ।
ज्यैष्ठे तु मिथुनं यत्र तत्र द्वैधं भवेत् सदा ॥
'द्वैधं' द्वन्द्वयुद्धमिति यावत् ।
आषाढे कर्कटो दुष्टो नभस्ये कन्यका तथा ।
आश्विने तु तुला दुष्टा वृश्चिकः कार्त्तिके तथा ॥
चापं मार्गे भवेद्दुष्टं तेन मार्गो न शोभनः ।
माघे कुम्भस्तु वै दुष्टस्तत्रारम्भो न शोभनः ॥
माधि माघाष्टकञ्चेति दूषितं वै परस्परं ।
तेन चैषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥
तथा ।
सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।
अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
नातिचीर्णे निमग्नाचे गृहारम्भो भवेदिह ॥
विष्णुधर्मोत्तरे ।
प्रावृट्काले न कर्त्तव्यं वास्तुकर्म विजानता ।
तपनः ।
कृष्णपक्षान्ते त्रिभागे कृष्णैकादशीमारभ्य दिनपञ्चके शुक्लपक्षान्ते त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादशीमारभ्य दिनदशकं त्रिविधं भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र प्रशस्ते याः शुभा वास्तुकर्मणि ।
शस्ते मासि सिते पक्षे प्रतिपच्च द्वितीयया ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एताः पूर्णेति विख्याता नामतस्तिथयस्त्विमाः ।
चतुर्थ्यां वाथ नवम्यां वा दक्षिणास्यं विवर्जयेत् ॥
तत्र संवसतो यस्माद्धन्याधिभयं भवेत् ।
तथा वाराः प्रशस्ताः स्युः रवि-भौमवर्जिताः ॥
दिव्यान्तरीक्ष-क्षितिजैरुत्पातैर्भवपीड़ितम् ।
ग्रहोपसृष्टं सन्ध्याव्यं व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्टं' पापग्रहदूषितम् ।

चन्द्र-तारानुकूले भे कर्त्तुः कार्यं विजानता ।
ध्रुवाणि तानि शस्तानि प्राक्तवर्ज्यं तं तथा ॥

'ध्रुवाणि' रोहिण्युत्तरात्रयं चेति ।

वायव्यं वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र-व्याघात-शूलेषु व्यतीपातातिगण्डयोः ।
विष्कुम्भ-गण्ड-परिघान् वर्जयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः।
अतिगण्डो व्यतीपातः परिघो वज्र एव च॥
गण्डं शूलश्च विष्कुम्भो व्याघातश्च सुदुःखदः।
एतान् योगान् समावर्ज्य शुभावे तेषु चैव हि॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेत्सुधीः।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्जयेत्॥
अतिगण्डेषु वै षट् नव वा दोषदायकाः।
गण्डे तु घटिकाः षष्ठा व्याघाते नव षट् च वा॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः।
एतेषां घटिकाः शेषाः सर्वास्त्वन्याः शुभावहाः॥
योगाः शुभावहाः कार्य्या वास्तुस्थापनकर्मणि।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता॥

तथा।

करणान्यथ वक्ष्यामि वास्त्वारम्भे शुभाय वै।
तैतिलं वणिजं नागं बालवं करणान्तरम्।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च॥

विष्णुधर्म्मोत्तरे।

अङ्गारकदिनं नाम करणं विष्टिसंज्ञकम्।

वर्जयेदित्यनुषङ्गः।

मत्स्यपुराणे।

श्वेते मैत्रेऽथ माहेन्द्रे गान्धे वाति विरोहणे ।
तथा वैराजसाविचे मुहूर्त्ते प्रतमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रयादि कर्त्तव्यमन्यच परिवर्ज्जयेत् ।
प्रासादेऽप्येवमेव स्यात् कूप-वापीषु चैव हि ॥

विश्वकर्ममते ।

मुहूर्त्तान् कथयिष्यामि यैः कृतैः सर्वसम्पदः ।
माहेन्द्रे रौहिणे चैव साविचे मिचके तथा ॥
गान्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् गृहान् ।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि ॥
विराजोविजयः श्वेतः साविचो मैत्रिकोऽभिजित् ।
बलश्चेति समाख्याताः सर्वे सर्वार्थसिद्धिदाः ॥
अथ वारविशेषेण वर्जनीयान् ब्रवीमि ते ।
अर्यम्णोऽर्के तु वैराज्यश्चन्द्रे वै ब्रह्मराक्षसौ ॥
पित्र्या श्वेतौ कुजे गान्धौ बुधे चैवाभिजित्तथा ।
पित्र्यब्राह्मौ तथा शुक्रे राक्षसाप्यौ बृहस्पतौ ।
भौजङ्गेशौ मुहूर्त्तौ तौ वर्जनीयौ शनैश्चरे ॥

विष्णुधर्मोत्तरे ।

खिरलग्ने खिरांशे च कर्त्तुश्चोपचयान्विते ।

'स्थिरलग्नानि' वृष-सिंह-वृश्चिक-कुम्भाः । 'कर्त्तुः' कारयितुः, 'उपचयान्विते' त्रिषडेकादशस्थानस्थिते ।

तथाच ज्ञातके ।

त्रिषडेकादशदशमान्युपचयभवनान्यतोऽन्यथान्यानि।

यस्य सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः।

पापाश्चोपचयस्थाने तस्मिन् कार्यं निवेशनम्॥

वृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च।

तथाच लघुजातके।

क्षीणेन्द्वर्क-यमाराः पापास्तैः संयुतः सौम्यः।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति। 'केन्द्राणि' लग्नानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि।'त्रिकोणं' नवपञ्चमस्थानं।

तथाच जातके।

केन्द्रचतुष्टयं कण्टकञ्च लग्नात् सप्तदशचतुर्थानां सञ्ज्ञयः इति,

नवपञ्चमं त्रिकोणं नवर्क्षत्रिकोणं चेति।

केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु।

केन्द्रसौम्ययुतं देवं न तु शून्यं कदाचन॥

विश्वकर्ममते।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभाशुभं।

वृषो धनुस्तुला-कन्या मिथुनं कर्कटस्तथा॥

लग्नान्येतानि शस्तानि गृह-प्रासादकर्मणि।

कृतमेतेषु लग्नेषु सर्वसिद्धी भवेदिह॥

एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः।

पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं॥

चन्द्रार्कादिग्रहाः सर्वे स्वर्क्षेत्रे शुभदा गृहे।

नीचगा न च नीचस्था न च तीक्ष्णांशुदूषिताः ॥

सूर्यादिग्रहाणां स्वक्षेत्राणि, सूर्यस्य सिंहः क्षेत्रं, सोमस्य कर्कः, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन-कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष-तुले, शनैश्चरस्य मकर-कुम्भाविति ।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क-ज्ञ-शुक्र-जीव-कुज-सौरि-शनि-गुरवः भेशा इति ।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थः ।

'कुजः' मङ्गलः, 'ज्ञः' बुधः, 'जीवः' गुरुः, 'सौरिः' शनैश्चरः, 'भानि' राशयः, इति ।

तथोच्चं नीचञ्च परिभाषितं जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिज्यांशाः कथिता वर्कोद्युच्चाः दश अष्टाविंशति-तिथीन्द्रियसप्तविंशतिविंशतिरुच्चानीचं सप्तममिति ।

अस्यार्थः मेषस्याद्या दशविंशांशा रवेरुच्चं । वृषस्याद्यास्त्रयस्त्रिंशांशाः सोमस्योच्चं । मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्चं । एवं कन्यायाः पञ्चदशत्रिंशांशाः बुधस्योच्चं । कर्कटस्य पञ्च गुरोरुच्चं । मीनस्य सप्तविंशतिः शुक्रस्योच्चं । तुलाया विंशतिः शनेरुच्चं ।

एतत्सर्वं समालोच्य विबुध्य निपुणं सुधीः ।
आरभेत प्रयत्नेन वास्तुकर्म सुविस्तृतं ॥

इति वास्तुप्रकरणं ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

तत्र सामान्यतः प्रतिष्ठाकालनिर्णयः ।

विष्णुधर्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।

यस्मिन् काले कृता या स्यात् फलसिद्धिप्रदायनी ॥

धन-धान्यवती स्फीता वरदा च तदा भवेत् ।

दृढ़ा भवति विख्याता चित्रिवेश्मे गुरौ युते ॥

ऐन्द्रे तेजस्वती स्फीता भूतविग्रहकारिणी ।

तथाविधा तु सा स्फीता यदि दाहमवाप्नुयात् ॥

नित्यास्वर्ययुता लाष्ट्रे गम्यलोके तथैव च ।

अहिर्बुध्न्ये तथा नित्यं लोकानुग्रहकारिणी ॥

पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।

सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।

ऐन्द्राग्ने नाशमाप्नोति कर्त्तुः कृत्वा विनाशनं ॥

आश्विने श्रीमती भूत्वा तथा पुत्त्रमवाप्नुयात् ।

लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥

अयुग्मेऽपि यदा कार्य्या प्रतिष्ठा मनुजोत्तम ।

यस्मिन् युगे तु यो नाथो यो यो देवः प्रकीर्त्तितः ।

धन धान्यवती स्फीता कर्त्तुः श्रेयोजयावहा ॥

प्रभवादिभिः पञ्चभिः संवत्सरैर्विष्णादीनि युगानि द्वादश तथै-
वाभिहितानि ।

संवत्सराख्यवर्षेषु नित्यमाढ्यायुता भवेत् ।
परिपूर्वे तु भर्तृघ्नी शोकव्याप्ता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाशमाप्नोति कर्तुर्नाशवशा भवेत् ।
तथापि प्रभोर्नृत्यस्य समये रोचिता भवेत् ॥

प्रभवाद्यः पञ्च क्रमेण संवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकञ्च क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तत्रैवाभिहितं ।

मत्स्यपुराणे ।

प्राप्य शुक्लं शुभं पक्षमतीते चोत्तरायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने सौम्या धनवृद्धिकरी भवेत् ।
तथापि सुप्ते देवेशे सर्वानर्थविवर्द्धिनी ॥
शिशिरे लोककान्ता वा दृढा च वसुधाधिप ।
ख्याता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्काले तथा नाशं कर्त्ता तत्र समाप्नुयात् ॥

प्रावृट्कालनिषेधश्च शिवप्रतिष्ठाव्यतिरिक्तविषयः, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले कृता नाशं शीघ्रमेव प्रपद्यते ।
हेमन्ते च सदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्त्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
शोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आज्ञायुता सदा ज्यैष्ठे आषाढ़े धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात् प्रौष्ठपादे विनश्यति ॥
आश्विने नाशमाप्नोति वह्निना कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषावहा तु माघे स्यात् कर्त्तुरात्मन एव च ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अत्र माघमासनिषेधो विष्णुप्रतिष्ठाविषयः, विधिस्तु तद्व्यतिरिक्तदेवताप्रतिष्ठाविषयः, मार्गशीर्षमासविधिश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषयः मार्गशीर्षमासनिषेधस्य विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात् । श्रावणाश्विनमासनिषेधस्य विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्द्वयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहुः "माघमासे सर्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तदुपन्यविषयतत्तत्प्रतिष्ठाविषयविशेषे ।

द्वितीये मध्यफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती ख्याता वरदा च तथा भवेत् ।
यस्य पक्षस्य वृद्धिः स्यात् तस्मिन् शुभफलप्रदा(१) ॥
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।

(१) शुभफला भवेदिति ख० ।

चतुर्थ्यां नाशमाप्नोति यमस्य कालसुखावहा ॥
विनायकस्य देवस्य तथा तच हितप्रदा ।
पञ्चम्यां नीयुता कर्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां सञ्चीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यबहुला नवम्यां तु विनश्यति ॥
भद्रकाल्याः कृता तच कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ॥
एकादश्यां तथा पुण्य द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
वृत्तत्रया च विज्ञेया तथा दोषवती नृप ।
दिव्यन्तरीक्षे भूमौ च उत्पातेन तु या युता ॥
कर्तुर्व्याधिप्रदा तच प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ क्षयोज्ञेयो वृद्धौ वृद्धिः प्रकीर्त्तिता ॥

मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च कृता तु फलदा भवेत् ॥

वचनसमुच्चये ।

तासु पक्षे सिते कार्या द्वितीया वै तिथिष्वथ ।
द्वितीयाद्युर्मतिं दद्यात्तृतीया पुत्रसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी धर्म्मवृद्धिश्च सौभाग्यञ्च त्रयोदशी ।
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा ।
एकविंशकरैर्नन्दा भद्रा पञ्चविंशाङ्गुभिः ॥
जया हि रामाश्विकाभैः रिक्ता वेद-यमेन्द्रियैः ।
बाण-दिक्तिथिभिः पूर्णा शोणतुल्या स्थिता क्रमात् ॥
एते शुक्लेऽनुलोमाः स्युर्बहुले च विलोमतः ।
हस्तस्थितिरियं चायुर्भोजन-धनानि च ॥
सर्वं स्वर्कः शुभः शुक्लचन्द्रः शान्तिप्ररोहणे ।
कर्कोदयचतुष्पाद्यमौविंशद्यामपुष्पके ॥
मध्ये घटाभिषेकश्च गिरिशानां प्रधानता ।
पञ्चहयचतुराद्यामाचन्द्रराशिक्रमेण तु ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी सूर्यदिने चन्द्रे क्षेमावहा भवेत् ।
भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ॥
गुरावपि स्वाद्वृष्टे नित्यं लोकानन्दकरी सिते ।
आचन्द्रार्कस्थिता सौरे प्रतिष्ठा समुदाहृता ॥

मत्स्यपुराणे ।

बुधो बृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः ।
एभिर्निरीक्षितं यच्च नक्षत्रञ्च प्रशस्यते ॥

वसुवचने ।

प्रीतिः सौभाग्यमायुष्मान् सुकर्मा शोभनो धृतिः ।
वृद्धिः सिद्धिः शुभः साध्यो वरीयाश्शिव-शुक्लकौ ।

प्रवोधरी च शिवं चेति योगाः तत्संज्ञकाः शुभाः ॥
ववश्च बालवश्चैव कौलवं तैतिलं तथा ।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पदं ।
नागं किन्तुघ्नमप्याहु विष्टिहीनन्तु पञ्चयोः ॥

विष्णुधर्मोत्तरे ।

शकुनौ दोषजननी चतुष्पदे भयावहा ।
नागे भवति सौम्या च किन्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा ज्ञेया तैतिले रोगनाशिनी ।
गराख्ये रोगजननी तथा वणिजि पुष्टिदा ।
विष्टौ मरणदा कर्तुरात्मदोषवती तथा ॥

मात्स्ये ।

आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठा-श्रवण-रोहिण्यः पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्ये मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

ज्योतिषसमुच्चये ।

पुष्यपुष्करोहिणीकाश्यपा मृगाद्योत्तरा हिते ।
पुनर्वस्वनुराधाश्च चित्रा ज्येष्ठा मघीशुभि ॥
धनिष्ठा श्रवणी वैश्वे युगे भाद्रपदे तथा ।
अश्विनी रेवती भद्रे स्वाति-फाल्गुनिकाद्वयं ॥
चतुर्वर्जमथा ज्येष्ठा मूलार्द्रा भरणी मघा ।
एतानि प्रतिषेधानां चलार्चीवाश्रये तथा ॥

अथ-रोगकराश्विन्यो रोहिणी भयवृद्धिदा ।
हस्तः सिद्धिप्रदोऽचित्र आयुर्दाषाढयुग्मके ॥
पुनर्वसुः सुखं दद्यादनुराधा तु सम्पदः ।
चित्रा सर्वसुखं नित्यं ज्येष्ठा रोगविनाशकृत् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदः श्रवणः सदा ।
पूर्वभाद्रपदा वृद्धिर्वह्निमिश्रापि चाश्विनी ॥
रेवती पुष्टिदा नित्यं स्वाती कुर्य्याद्धनं बहु ।
फाल्गुन्योर्द्वितयं वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया ।
मृगः शान्तिप्रदो नित्यं धन्या शतभिषं त्यजेत् ।
मघेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी कृत्तिका च भूतनिग्रहकारिणी ।
किञ्चिद्भूता ततः काले न तदन्वितवर्ज्जिता ॥
अग्नेः सूर्य्यस्य सोमस्य कुमारस्य च या वरा ।
मन्त्राचास्य ललाटाश्च न दहन्ति च वर्ज्जिता ॥
प्राजापत्ये स्मृतो नित्यं लोकानुग्रहकारिणी ।
सौम्ये तु वरदा प्रोक्ता मूषकेषु विनश्यति ॥
आर्द्रायां कर्ममरणं क्षिप्रमेव प्रयच्छति ।
पुनर्वसौ विनाशश्च संस्कारस्यागुणात्पुनः ॥
तुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ।
अपि सर्पविनाशाय नागानां नाशकृद्भवेत् ॥

पित्रोर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
लोकगम्या भवेद्भाग्ये कर्तुर्नाशवशा तथा ॥
तथापि कामदेवस्य कर्तुः सौख्यवशा तथा ।
अर्यम्णे सुहृशा लक्ष्मीता लोकानुग्रहकारिणी ॥
आयुर्दा च क्षता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्य्ययुता लोके चित्रायाञ्च चित्तप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आषे क्लेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे ग्रीष्मनाशाय तथाय्ये मनुजोत्तम ।
अहिर्बुध्ने दृढा लक्ष्मीता कर्तुः सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगनाशिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
शार्कौ स्याच्छोकजननी सशौरे मृत्युदायिनी ।
सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥
केतुना धूमिते ऋक्षे वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
शौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नक्षत्रे अपरीक्षेपे परचक्रभयं भवेत्।
उल्काहते विनाशाय सभूकम्पभयप्रदा॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत्।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी।
अन्तरीक्षे च विज्ञेया लोकनाशकरी तथा॥
सर्वेभूत-व्यतीपातञ्चैकं विवर्जयेत्।
शेषैर्द्दीपैस्तथायुक्ता यावदागमनाद्ध्रुवः॥
अश्विन्यपिहिता कर्त्तुः क्षेमङ्करी भवेत्।
सम्पत्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा॥
क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी।
कर्म्मणां साधिका प्रोक्ता अश्वाख्ये दशमे शुभा॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा।
ज्ञेया त्रयोदशे क्षेम्या रोगदा च चतुर्दशे॥
वृद्धिदा पञ्चदशके षोडशे निधनप्रदा।
सप्तदशे भूतिकरी नन्दा[1] चाष्टादशे भवेत्॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा॥
चतुर्थे क्षेमजननी पञ्चमे रोगवर्द्धिनी।

(१) नन्दयतीति नन्दा सुखदेति यावत्।

षष्ठे अष्टौकरी ज्ञेया धन-धान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्तुर्दोषवती भवेत् ॥
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशमः सप्तमश्चैव चन्द्रा विप्रो भवेद्‌ग्रहैः ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमैः ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फलं लभेत् ॥
विपर्य्ययेण वेधश्चेत्पापोऽपि शुभकृत्ततः ।
चन्द्राद्द्वादशगे सूर्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा सौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ।
एकस्मिंस्तु यदा केन्द्रे चन्द्रमाश्च व्यवस्थितः ॥
केन्द्रपंचमधान्यस्थायुक्तं सूर्यारसूर्यजैः ।
तदा कर्तुर्विनाशाय प्रतिष्ठा खगराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
ससौरे मृत्युदा ज्ञेया सराहौ निधनप्रदा ॥
ग्रहणे चोपरागे तु कर्तुर्मरणदायिनी ।
परिघस्थे[१]तथा चन्द्रे तथा ज्येष्ठाजपादगे ।
पौष्णाजपादने चैव कर्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शपुस्तकेषु एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिघस्थे इत्ययं पाठो भवितुमर्हति ।

लक्षणसमुच्चये ।

शस्तोजीवो नव-दौषु-सप्तस्थानेषु सर्वदा ।
बुधः षष्ठाष्ट-तुर्य्येषु दिक्सप्त-नवराशितः ॥
सप्त-त्रि-षष्ठ दशमः शशी शुभफलप्रदः ।
रविर्दश-त्रिषट्संस्थो राहुस्त्रि-दशषड्गतः ॥
त्रि-षट्स्थानगताः शस्ता मन्दाङ्गारक-केतवः ।
शुभाः क्रूराः सपापाश्च सर्वे एकादशास्तथा ॥
एषां दृष्टिर्मुनौ पूर्णा वाङ्घ्रिकौ पञ्च-भूतयोः ।
पादिकौ रामदिक्स्थाने वसुखयोः पादवर्जिता ॥
द्वितीया सम्पदाख्या तु चतुर्थी क्षेमसंज्ञका ।
षष्ठी च साधिका तारा अष्टमी शत्रुनाशिका ।
नवमी चातिमित्रा स्यादेताः पञ्च फलप्रदाः ॥

विष्णुधर्मोत्तरे ।

जन्मराश्युदयेकर्तुः क्षिप्रं नाशकरी भवेत् ।
द्वितीये धननाशाय तृतीये कार्य्यवृद्धिदा ॥
चतुर्थे स्वजनाशाय पञ्चमे व्याधिदा भवेत् ।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी ॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी ।
दशमे कर्मणां हानी लाभे लाभकरी भवेत् ॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा कृता ।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत् ॥
जन्मराशिफलं ह्येवं सर्वस्थानेषु निर्दिशेत् ।

मेषोदये कृता क्षिप्रं नाशमाप्नोति पार्थिव ॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत् ।
शोककान्ता च मिथुने बहुकल्याणकारिणी ॥
कुलीरे क्षिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत् ।
कन्यायां शोककान्ता स्यात्तुलायां भवति स्थिरा ॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ।
मकरे क्षिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत् ॥
मीने गुणवहा कर्त्तुः कर्म्मे(१) शून्या तथा भवेत् ।
उग्रा स्यात् सूर्य्यदाभायां(२) सौम्या सौम्यस्य कीर्त्तिता ॥
पापपक्षस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता ।
सौम्या पटस्य सुशुभं कर्त्तुर्भवति वृद्धिदा ॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु ।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम ॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्य्ययोः ।
शतं जीवेत् प्रयोगाणां(३) कर्त्तुः कल्पपदा भवेत् ॥
शुभमंशं महाराज लग्नं पापफले शुभं ।
लग्ने शुभतरे प्राप्ते पापमंशमशोधनं ॥
वामसे शोकदा कर्त्तुः कृता भवति भास्करे ।

(१) कर्मविशेषे इत्यर्थः ।
(२) सूर्य्यदाभायामित्ययं पाठः आदर्शपुस्तकेष्वेकरूप एव वर्त्तते पर-न्त्वयं न समीचीनो विभाति ।
(३) प्रयोगाणां शतं जीवेदित्यन्वयः ।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयश्चतुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातस्तु दारिद्र्यं सप्तमे भवेत् ॥
मरणं चाष्टमे मासौ नवमे धर्मपीड़नं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुहृढा मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीड़नं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
अर्द्धविम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
अर्द्धविम्बाधिके क्षीणे क्रमादथ निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया चिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
वस्त्रधान्यं चतुर्थे स्यात् पुत्त्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता चाद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्त्तिं त्रिभुवने दद्यात् तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽग्नौ विनश्यति ।
अष्टमे कर्त्तृमरणं नवमे दशमच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत् ।
आयात्मजप्रकृतयो व्यये कुर्य्यस्तदाः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्त्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया सर्वदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा ।
स्थिरलाभगते ज्ञेया व्ययगे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
दृढाख्यदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्त्तुरष्टमे च बलवृद्धिदा ॥
कीर्त्तिदा नवमे ज्ञेया दशमेऽर्थवृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।

षष्ठे पुष्ट्या तथा शुक्रे सप्तमे धनवृद्धिदा ।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा(१) ॥
दशमे लोककान्ता स्यादरिनाशस्तथायगे ।
तथा व्ययस्थे विज्ञेया बह्वर्थे धनदा तथा ॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे ।
तृतीये धनलाभाय चतुर्थे कर्ममृत्युदा ॥
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ।
जायानाशस्तु जायास्थे मृत्युर्मृत्युपदोपगे ॥
धर्मगे धर्महानिः स्यात् कर्महानिस्तु कर्मगे ।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥
शून्यं विवर्जयेत् केन्द्रे तत्रैव नियोजयेत् ।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सुदैववित् ।
कुर्यात् प्रतिष्ठां यत्नेन यथोक्तविधानतः ॥
शुभेऽह्नि पूर्वं यत्नात्तां तत्कालप्रतिमान्तु याम् ।
समाप्तपीठिकां गर्त्ते स्थापितां विनिवेशयेत् ।
तत्कालमेवं कुर्वीत नानाचार्यां समाहितः ॥

लक्षणसमुच्चये ।

पादान्तूनचतुर्लग्नीभागः स्यान्मीन-मेषयोः ।
वृष-कुम्भौ च युग्मानौ ततः पादवर्जिताः ॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः ।

---

(१) सुखप्रदेति ख० ।

पादोनाः पट्तुलाः कन्ये घटिकाः सार्द्धपञ्च तु ॥
केसरी च वृषः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला-मेषाद्वयुग्मं मीन-कन्यके ।
कर्कटे कर्कटाख्यश्च प्रवर्ज्याः कार्यनाशकाः ॥
स्थिरः शुभग्रहैर्दृष्टः शस्तोलग्नः शुभान्वितः ।
गुरु-शुक्र-बुधैर्युक्ते लग्ने दद्यादलायुषी ॥
राज्यं सौख्यं बलं पुंसां देवधर्मादिकं बहु ।
प्रथमः सप्तमस्तुर्यो दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
एकादश-चतुर्थस्था लग्नात् पापाः शुभप्रदाः ।
अतोऽन्येऽनिष्टकर्मार्थं योज्यास्तिथ्यादयो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिरायां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फलं ॥
चन्द्रप्रीतिमुखे पुष्ये अयने च महातिथौ ।
ऋद्धिरारोग्यमैश्वर्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च अस्तसमितदुर्ग्रहे ।
दुष्टग्रहे दुष्टलग्ने नक्षत्रेऽशुभसंयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्द्दने ।
एतेषु स्थापिता देवाः भय-दुर्भिक्ष-रोगदाः ।
तस्माद्दिनं निरीक्ष्यादौ सर्वोपस्करमाहरेत् ॥

मत्स्यपुराणे ।

ग्रह-तारावलं बुद्ध्वा ग्रहपूजां विधाय च ।

निमित्तं प्राप्य लब्ध्वा वर्जयित्वा क्षुधादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
लग्ने क्षणे च कुर्वीत प्रतिष्ठादिकमुत्तमं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्नापनं कुर्यादिविदृष्टेन कर्मणा ॥

विष्णुधर्मोत्तरे ।

यस्मिन् ऋक्षे यद्देवोक्तं ऋक्षं भूपतिसत्तम ।
तद्देवेह ऋक्षं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च ।
आप्यो वैश्वस्तथा ब्राह्मः केशरः शक्रदेवतः ॥
ऐन्द्राग्नेयोनैर्ऋतश्च वारुणश्च महीपते ।
आर्यमणश्च तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदेवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदेवत्यो वैष्णवः सूर्यदेवतः ।
त्वाष्ट्रश्चैवाथ याम्यश्च मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यगते सूर्ये मुहूर्त्तेऽभिजिदष्टमे ।
सर्वकामप्रदः स्यात् सर्वोपद्रववर्जितः ॥

मत्स्यपुराणे ।

प्राजापत्ये तु प्रथमं ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्नापनं कुर्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्मोत्तरे ।

गुरावस्तमयं प्राप्ते नीचस्थे कर्तृघातिनी ।
तस्मादुच्चस्थे जीवे तु धन-धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे दृढा ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
वानस्पत्ये तु वरदा गान्धे गान्धर्वविवर्द्धिनी ।
वाये भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति क्लीवमब्दैवते तथा ।
सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ॥
नश्यते साध्यदैवत्ये गोदेवे वृद्धिमाप्नुयात् ।
शैवे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला वनदैवत्ये याम्ये मृत्युप्रदा भवेत् ।
वाग्दैवत्ये सदा वाग्मी भोगे च श्रीयुतो भवेत् ॥
धनगे धनसंयुक्तः सुदृढः प्रैषदैवते ॥
पृथ्वीदेवे दृढा सौम्या शुभा स्यादेददैवते ।
पौरुषे च तथा रोचे बहुधर्मविवर्द्धिनी ।
कर्तुः सुखावहा चैव तथा लाभयुता भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा।

अथ ज्योतिःसमुच्चये।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं।
दक्षिणे लयने पूर्व्वं चिवर्णादि भयावहं॥
अपरं स्थापनं नेष्टं तथा वै दक्षिणायने।
अपरे स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा॥
कुमाराः स्वल्पपीड्यन्ते कन्यानाशश्च जायते।
सुमहाशस्यलोपश्च तदा राज्ञां प्रजायते॥
कर्त्तुः क्षयः सदा शोको ग्रहे भवति दारुणः।
तस्मान्न स्थापयेद्देवं अपरे दक्षिणायने॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये।
प्रावृषि स्थापितं लिङ्गं भवेदरद्योगदं॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्वभूतिदं।
लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं।
यतीनां सर्वकाले च लिङ्गस्थारोपणं मतं॥

रत्नावल्यां।

माघ-फाल्गुन-वैशाख-ज्येष्ठाषाढेषु पञ्चसु।
मासेषु शुक्लपक्षेषु सदुष्टग्रहवर्जिते॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा।
द्वादश्येकादशी षाष्ठा पूर्णिमा च त्रयोदशी॥
गुरुः शुक्रो बुधः सोमोवरयेषु सुखावहं।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवणं तथा ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्लेषा च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकालं द्विपक्षयोः ।
लिङ्गस्य स्थापनं शस्तं यतेः कामार्थिनो ध्रुवं ॥

रत्नावल्यां ।

सौभाग्यः शोभनायुष्मान् सिद्धः साध्यः शिवः शुभः ।
वृद्धिः प्रीतिर्धृतिः सिद्धिः ध्रुवः शुक्लः सुशोभनम् ॥
ववश्च बालवश्चैव कौलवस्तैतिलं शुभम् ।
नैवं परममेतच्च सम्यक्देवं यथा शुभम् ॥
लग्नश्च वृश्चिकः सिंहो मेषोमिथुन-कर्कटौ ।
तथा कन्या तुला-कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धिः सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे यदा ॥
रेवती भृगुषष्ठ्या शुक्रवारे पुनर्वसुः । ·
श्रवणं शनिवारे च सिद्धियोगाः शुभा मताः ॥
अष्टमप्रश्नतयोऽथ षट्सप्तैकादशाः शुभाः ।
भौम-मन्दौ तृतीयौ च द्वि-सप्ताष्ट-शरैर्गुरुः ॥
अष्ट-तुर्य-रसाष्टस्थो दशमस्य शुभो बुधः ।
रख-सप्त-दशान्यस्थः शुक्रस्याथ प्रयत्नतः ॥
शेषमध्ये ग्रहाः सर्वे यमकण्ठेति निश्चिताः ।

यस्मात्ते सर्वकार्य्येषु तस्मात्तेष्वनियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः ।
पापाः पापाश्रया यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न लग्नेन्दोर्यदा यशाः ।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति ।
प्रतिष्ठादिशुभारम्भान् दूरयात्रां विवर्जयेत् ॥
अन्यद्गुह्यतरं यत्नात् ज्योतिःशास्त्रविशारदः ।
समालोक्य नियुञ्जीत सर्वशाध्यान्यथाचरेत् ॥

लक्षणसमुच्चये ।

सुदिने शुक्लपक्षे च रविवारर्क्षभूषिते ।
शुभनक्षत्रतारकायोगे सुलग्ने करणान्विते ॥
शैवे द्वैधे प्रतिष्ठा स्याच्छिवे च सितपक्षके ।
अद्वैते चैव कृष्णेऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
द्वैता सिद्धान्तिको रौद्री शतं वर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ॥
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ।
शताद्र्धार्द्धन्तु सा तिष्ठेत् वाणलिङ्गस्वयम्भुवा ॥

इति शिवप्रतिष्ठा ।

---

(१) निम्न इति ख० ।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्याद्दक्षिणे वा नराग्नितम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
मासेषु फाल्गुनः श्रेष्ठः चैत्रो वैशाख एव च ।
तेषेऽप्यसम्युक्ताये श्रावणे माघि वा भवेत् ॥

तत्त्वसारसंहितायां ।

प्रतिष्ठापर्वभिः प्रोक्ता या क्रमादच्युतेऽथ वा ।
प्रतिपच्च द्वितीया च नवमी च त्रयोदशी ।
दशमी द्वादशी पूर्वे शुक्लपक्षे शुभान्विता ॥

महापद्मपुराणे ।

पौर्णमास्यां त्रयोदश्यां द्वादश्यां शुक्लपक्षतः ।
प्रतिपद्द्वितीययोर्वा पञ्चम्यां दशम्यामपि ।
संहिताविषयश्चेता चाययोग्यं शृणुष्व मे ॥

वैखानससंहितायां :

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।
पितृमुत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥
सौम्य-स्वात्यनुराधासु तिष्ये चैव विशेषतः ।
चन्द्रस्मिन् शुभशस्ते वा चन्द्रोऽनुकूलसंयुते ॥
अश्विनी-रोहिणीयोगे पुनर्वसौ च शुभाः ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च ।
त्रिषु नक्षत्रयोगेषु क्रमेणैषूत्तरायणे ॥

सागरसंहितायां ।

सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठा-योगकर्मणि ॥

'ग्रहाः' वाराः । 'सौम्याः' अनुकूलाः ।

महापञ्चरात्रे ।

सौम्यपक्षे प्रशस्तदिने सोम-भार्गववासरे ।
ग्रहयोग एवं भवेत्प्रतिष्ठा-यज्ञकर्मणि ॥

वैखानससंहितायां नृसिंहपुराणे ।

पूर्वपक्षे शुभे काले स्थिरे चोर्ध्वमुखेऽपि भे ।
अनुकूले च लग्ने च हरिः स्थाप्योऽमरैस्तथा ॥
नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते ।
गुरु-शुक्र-बुधेन्दूनां एकवारयुते शुभे ॥
ग्रामस्य यजमानस्याप्यनुकूलेऽपि तत्र वै ।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च ।
सुप्रशस्ते मुहूर्त्ते वै प्रतिष्ठां कारयेद्धरेः ॥

लक्षणसमुच्चये ।

सुदिने सितपक्षे च सुरवारर्क्षभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
दैते दैवे प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
चरेते चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः ॥

द्वैता सिद्धाग्निकी रौद्री शतवर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमन्त्रजा ॥

मधूककाष्ठप्रतिमाप्रतिष्ठाकाल्यं वाराहपुराणे ।

शुक्लपक्षे तु द्वादश्यां नक्षत्रे रैवते तथा ।
तत्र संस्थापनं कुर्य्याद्भूमिसिद्ध्यर्थसाधनं ॥

इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।

गुरौ मेषगते शुक्रे देवीञ्चाथ प्रतिष्ठपेत् ।
इहैव स भवेद्धन्यो मृतोगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा माघाश्विनौ मासावुत्तमौ परिकीर्त्तितौ ॥
देवी तत्र सदा शक्र-पांशुनापि प्रतिष्ठिता ।
भवते फलदा पुंसां कर्कस्थे च वृषस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु सदा देवीं स्थापयित्वा विधानतः ॥
न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ।
मातृ-भैरव-वाराह-नरसिंह-त्रिविक्रमाः ।

मणिधातुरत्नमयस्य स्थाप्या वै दक्षिणायने ॥

तथाच चतुःषष्टिप्रतिष्ठायाम्।

ब्रह्मोवाच।

स्थापनञ्च प्रवक्ष्यामि सर्व्वकामप्रसाधकम्।

सर्व्वकालं प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥

रात्रिरूपा यतो देवी दिवारूपो महेश्वरः।

अतः सकालपूजाभिः सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णयः।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः।

वह्निपुराणे।

वापी-कूप-तडागानां तस्मिन् काले विधिः स्मृतः।

सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥

कर्कटे पुत्त्रलाभस्तु सौख्यं तु मकरे भवेत्।

मीने धर्म्मोऽर्थलाभस्तु कुम्भे च सुखशुद्धकम् ॥

वृषे च मिथुने हृद्धिर्वृश्चिके क्षयं भवेत्।

पितृलस्थितस्तु कन्यायां तुलायां शाश्वती गतिः।

सिंहे मेषे धनघ्नानं क्षयोपि दिने च्छति ॥

भविष्योत्तरपुराणे।

तस्मिन् सलिलसम्पूर्णे कार्त्तिके सविशेषतः ।
तडागस्य विधिः कार्य्यः स्थिरलग्नप्रयोगतः ॥
मुनयः केचिदिच्छन्ति व्यतीते चोत्तरायणे ।
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः ।

---

## अथ षोडशोऽध्यायः ।

### अथ दीक्षाकालः ।

तत्र नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यत्रापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यालम्भनकर्मणि ।
कार्त्तिक्याश्चैव वैशाख्यां स्वर्भानोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्योपरागेषु षडशीतिमुखेषु च ।
ग्रह-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे च मासे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व दीक्षा स्यादर्पासु मधु-पौषयोः ।
अन्यत्र तु सदा कार्य्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निमित्तानि प्रशस्तान्युपलक्षयेत् ॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः ।

प्रसिद्धास्तिथयोराजदर्शनं गुरुपर्व च ।
पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा ॥

रत्नावल्याम् ।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च[1] चतुर्दशीम् ।
पूर्णमासीं विना शेषा शिता शुक्लौ मुमुक्षुषु ।
आदित्यं मङ्गलं शौरिं त्यक्त्वा वारास्तु भूतये ॥

सुप्रभेदे ।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा ।
दशम्याञ्च त्रयोदश्यां दीक्षाकर्म प्रशस्यते ॥

क्वचित्तु त्रयोदश्याममावास्यामिति पाठः ।

सितेन्दु-ज्ञ-गुरूणान्तु परीक्षेत गुणागुणैः ।
गुणैर्युक्तांस्तु संग्राह्या गुणहीनांस्तु वर्जयेत् ॥

कालोत्तरे ।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।
पूर्णमास्यां प्रकर्त्तव्यं भुक्तिकामैः सिते सदा ॥
मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत् ।
दिनच्छिद्राणि मुक्त्वा च चान्यास्तिथयः स्मृताः ॥

तत्त्वसागरसंहितायाम् ।

---

(१) षष्ठीं पञ्चमीञ्चेति क० ।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत्।

इन्द्र उवाच।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद।
सङ्क्षेपेणैव दीक्षायां विशेषावसरं तथा॥

नारद उवाच।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।
चतुर्दशी शिवस्योक्ता वायः प्रोक्ता त्रयोदशी॥
द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका।
शिवमार्गेषु पार्वत्या अष्टमी च चतुर्दशी॥
अष्टमी गणनाथस्य भानोः प्रोक्ता तु सप्तमी।
एवमुक्तास्तु सङ्क्षेपात्तिथयः परिभाषिताः।
प्रपञ्चेन तिथीः सर्वाः सविचारोपणे स्मृताः।

कारणे।

पौष्णं रोहिण्यथादित्यं श्रवणञ्चाश्विनी तथा।
सावित्रं लाङ्ग-वायव्ये नैर्ऋतं मैत्रमेव च॥
तिष्यं चित्रत्तराद्रा तु श्रविष्ठा च विजन्मभम्।
नक्षत्राणि प्रशस्तानि दीक्षाकर्म्मणि सुव्रत॥

रत्नावल्याम्।

त्रीण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम्।
हस्तः स्वातिरनुराधा मघा मूलञ्च रेवती॥
अभिजिच्छ्रवणश्चेति शिवयोगे चतुर्दशी।
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः ।
वरीयांश्च शिवः सिद्धोब्रह्मा ऐन्द्रश्च योगग्न ॥
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ।
किन्तु देशिकसेकादौ शुभान्यन्यापि पूर्ववत् ॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा ।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा ॥
द्वादश्या सर्पनक्षत्रमर्य्यम्णा च त्रयोदशी ।
नक्षत्रजन्मा इत्येते देवानामपि नाशदाः ॥

कारणे ।

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभये स्मृताः ।
स्थिरश्च नैधनस्थाने ग्रहाः सर्वे विवर्जिताः ।
आचार्य्य-शिष्ययोरानुकूल्यं शुभप्रदं भवेत् ॥

क्रियाकाण्डशेखरे ।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि ।
वर्ण्णं गोचरशुद्धिश्च योगशास्त्रे प्रतीयताम् ॥
लग्नदोष-ग्रहदोषाः सर्वे नश्यन्ति ते शुभे ।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे च बृहस्पतौ ॥
इत्यादिनिपुणं वीक्ष्य दीक्षां मौमुक्षवीमृति ।
मौमुक्षवीं प्रति न यत्कालादिनियमः स्मृतः ॥
मन्त्रवर्णेषु सिद्धान्ते सुसिद्धान्मेलयेद्बुधः ।
वैवर्ण्यानुदासीनान् गणयेद्दशभिः पृथक् ॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः स्वरैः ।

मृडूराशिस्तु यः प्रोक्तोयामे सन्मोदिता हि या ॥
रिपुराशिगतः प्रोक्तोमासोऽसौ परिकीर्त्तितः ।
हरेत्पञ्चदशं भागं तिथिज्ञानाय सल्लगम् ॥
मासि तस्मिंस्तथा यामे कुर्वीत ग्रहणं मनोः ।
ज्योतिःशास्त्रानुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अथ दीक्षार्थं प्रशस्तास्तिथीः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि ।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सङ्गतश्च उपस्थिते ।
तदनुज्ञा यदा लब्धा स दीक्षावसरोभवेत् ॥
ग्रामे वा यदि वारण्ये चेत्रे वा दिवसे निशि ।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
प्राप्ता दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः ।

---

## अथ विष्णुदीक्षाकालः ।

क्रतुपञ्चरात्रे ।

विज्ञाय नीतिप्रवणं हि शिष्य-
मुदग्गतौ तीक्ष्णकरस्य काले ।

सोमस्य हस्तौ शुभलग्नयुक्ते
सन्दीक्षयेद्वै ह्यथवा गुरुस्तु ॥

महापञ्चरात्रे।

द्वादश्यां शुक्लपक्षस्य सूर्य्यसंक्रमणे तथा।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालशुद्धिश्च देशिकः।
तदेकादिक्षणः पूर्वमधिवासनमारभेत् ॥

तन्त्रसागरसंहितायाम्।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।
चतुर्दशी शिवे प्रोक्ता वायः प्रोक्ता चतुर्दशी ॥

सौरपञ्चरात्रे नवकदीक्षाविषये।

दीक्षाविधौ वा नवके च काले
चाष्टादशी पञ्चदशी तिथिस्तु।
एकादशी पञ्चदशी तिथिश्च
भवेच्चतुर्दश्यथवाष्टमी च।
यात्रादिके योगविधौ प्रशस्ता
चाद्देवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः।

---

## अथ सप्तदशोऽध्यायः ।

### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्मोत्तरे ।

कालश्च द्विविधो ज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलश्च लौकिको ज्ञेयः सूक्ष्मश्चाध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं सूक्ष्मं कालविधिं शृणु ।
लक्षाणकाक्षिनिमिषतुर्य्यभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तश्च तदेव घटिकाद्वयम् ।
सार्द्धाश्च नाडिकाः सप्त यामस्तत्सन्धिरुच्यते ।
सन्ध्योऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्वतिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं मध्य उदयेऽस्तमनं समं ।
परार्द्धेषु कालेषु पूजयेत्तु विशेषतः ॥
त्रिकालं वा चिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय यजनं सर्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिक्रमशाद्दोषाः क्षते चेत्तु न दोषकः ।

पूर्वाह्णे चैव मध्याह्ने प्रदोषे बलिमाचरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्य्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा नैव कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्णात्तु समारभ्य यावत्तु दश नाडिकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाडिकाः ।
सायङ्काल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तस्त्वर्द्धरात्रमथोच्यते ॥
अर्द्धयामात्समारभ्य यावत्तु दश नाडिकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनक्तमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिनक्तमिति प्रोक्तं कालेवं सर्वमाचरेत् ॥
अङ्कुरार्पणं पुष्पसंचयं चयनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा समाचरः ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै द्वय नाडिकाः ।
तावदापि प्रकर्त्तव्यं तीर्थकार्यं प्रजापते ॥
अङ्कुरार्पणकार्यं तु सायमप्यधिवासनं ॥
यागञ्च प्रारभेद्धोमान् रथाद्येव प्रबन्धने ॥
स्नापने मोक्षणे चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
रात्र्यन्ते विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं मध्याह्नं तदाशुभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवं ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं कृष्णं सम्यग् यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया ब्रह्मणस्तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेस्तु अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी त्वनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी प्रजेशस्य पितॄणां दर्श उच्यते ॥

इति देवताविशेषपूजने तिथिविशेषाः ।

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यत्पुराणे ।

अग्निमिष्ट्वा च जुहुत्वा च प्रतिपद्यन्नतं व्रतम् ।
हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्रह्माणञ्च द्वितीयायां संपूज्य ब्रह्मचारिणः ।

भोजयित्वा च विप्राणां सर्वासां पारगो भवेत् ॥
तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्यात् चतुर्थ्यां सर्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्य्यजातस्य कर्हिचित् ॥
नागानिष्ट्वा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्रान् परांश्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मायावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूडाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युश्च धनदश्चैव पापघ्न च प्रपूजितः ।
दुर्गां संपूज्य दुर्गाणां नवम्यां तत्परेच्छया ।
संग्रामे व्यवहारे च सदा विजयमाप्नुयात् ॥
दशम्यां धर्मराजश्च सर्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः ।
प्रजां पुष्टिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनस्तथा जायते संशयः ॥
त्रयोदश्यान्तु सम्पूज्य कामदेवं महाबलम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्व्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
बह्वपत्यं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्त्युक्तफलप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु संज्ञाभिरुक्तमन्त्राश्च कीर्त्तिताः ।
पूर्व्वञ्च पञ्चपत्राः कर्त्तव्याश्च तिथीश्वराः ॥
एतेषाञ्च रूपाणि देवताकाण्डे भाषोक्तानि ।
गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा श्राद्धे न कर्त्तव्या क्वापि न फलप्रदा ॥
आज्यधाराभिषिक्तैश्च दधि-क्षीराज्य-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं द्वयाब्दे च[1] फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतेष्वाधिकानि तु ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मन्त्रज्ञो यावतीच[2] तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टजन्मा जायते नरः ।

(१) द्व्य-ब्दे चेति ख० ।    (२) यावत्येवेति ख० ।

सुरूपो धनसम्पन्नो निर्ज्जितारिर्महीपतिः ।
स्त्रीपुत्रपुत्रको वापि जायते पुरुषोत्तमः ॥

कूर्म्मपुराणे ।

देवताभ्यर्च्चनं नृणामशेषाघौघनाशनम् ।
अमावास्यां तिथिं प्राप्य यस्त्वाराधयते भवम् ।
ब्राह्मणं पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्व्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य उद्दिश्य च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्च्चयेद्भानुं मुच्यते सर्व्वपातकैः ॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे ।

मार्कण्डेय उवाच ।

कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
संवत्सरेण सर्व्वेण सोपवासस्य सर्व्वदा ॥

ब्रह्माणं पूजयेत् देवं सततं प्रथमेऽहनि ।
पञ्चदशे महाभाग पञ्चदश्यामुपोषितः ॥
संवत्सरेण धर्म्मज्ञ विद्यावन्तसुवर्णकम् ।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते ॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥
कालस्यावयवाः सर्वे तस्मिन्नहनि पूजिताः ।
यच्छन्ति च धर्म्मज्ञ सौख्यं दद्युरनुत्तमम् ॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत् ।
महाच सौख्यमाप्नोति स्वास्थ्यमत्यन्तमेव च ॥
तथाग्निं ब्रह्मणा सृष्टं त्रैलोक्ये प्रथमं द्विज ।
दक्षं प्रजापतिं नित्यं द्वितीयायामथार्च्चयेत् ।
फलमाप्नोति धर्म्मज्ञ गोमेधस्य न संशयः ॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ।
नित्यमारोग्यमाप्नोति तथा रूपञ्च भार्गव ॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम् ।
कृत्वा दत्त्वा च लवणं प्राणान्ते सुभगो भवेत् ॥
साध्या द्वादश ये प्रोक्तास्तेषां कृत्वा तु पूजनम् ।
तृतीयायां महाभाग द्वादशाहफलं भवेत् ॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु-महेश्वरान् ।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत् ॥

चीन् श्रोकांश्च तदा नाम सम्यक् संपूज्य मानवः ।
ऐश्वर्यं महदाप्नोति गतिमग्र्यां च विन्दति ॥
तृतीया माधवे शुक्ला या स्यात् श्रवणसंयुता ।
तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात् ॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥
सा तस्मात् कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते ॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम् ।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता ॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ।
वरान् सुसंस्कृतांश्चैव कृत्वा चैव तथाक्षतान् ॥
विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् ।
यवान्नं सुमहाभाग फलमक्षयमश्नुते ॥
एकामप्युक्तवत् कृत्वा द्वितीयां भृगुनन्दन ।
एतामप्यतृतीयानां सर्वासान्तु फलं लभेत् ॥
प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ।
चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात् ॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्मिकः ।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥
विनायकमथाभ्यर्च्य चतुर्थ्यां भृगुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥

श्रिद्धीं रतिं तथा भद्रां कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तथैवाद्द्रनि पूजयेत् ॥
तत्प्रसादाद्दवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्वास्तच तथाह्नि पूजिताः ।
सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति धनधान्यञ्च विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
तामवाप्नोति धर्म्मेण नाच कार्य्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्वमेव मया द्विज ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
दृष्टं गन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्य्यास्तथा सर्वाः संपूज्य सुभगो भवेत् ।
दृष्टा लभ्यरसश्चैव तथा रूपमवाप्नुयात् ॥
दृष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वारुणे पुष्करावर्त्तं पञ्चम्यां सुखमारभेत् ॥
सर्वकामसमृद्धस्य धनस्य सुफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूबरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमपोहिताम् ॥

सर्व्वेषां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम्।
उमां मेधां भद्रकालीं तथा कात्यायनीमपि॥
धृतिं स्वाहां स्वधां वृद्धिं अनसूयां तथा क्षमाम्।
सुरभिं देवसेनाञ्च वेलां ज्योत्स्नां तथा शचीम्॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च।
धूम्राख्यां सुमहाभागां मृत्युच्छायां तथैव च॥
अभीष्टदेवजननीं देवपत्नीं तथैव च।
पूजयेत् काममाप्नोति तथान्येकामसंशयम्॥
ऐरावतञ्च गरुडमुच्चैःश्रवसमेव च।
हरस्य वृषभञ्चैव शस्त्राण्यस्त्राणि यानि च।
तथा संपूजयेद्राजन् विजयं समुपाश्नुते॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा।
चतुरात्मविनिर्द्दिष्टो भगवान् क्रौञ्चसूदनः॥
तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान्।
बालानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम्॥
मातॄणां पूजनं तत्र कृत्वा तु सुखमाप्नुयात्।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात्॥
कालपाशांस्तथाभ्यर्च्य सूर्य्यपत्नीं सुवर्च्चसम्।
इष्टान् कामानवाप्नोति नात्र कार्य्या विचारणा॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्त्तिताः।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात्॥
इन्द्रस्य पूजां प्रेतस्य तदा कृत्वा सुखी भवेत्।
पूजयित्वा तथाभीष्टां चरितं पुण्यभाग् भवेत्॥
वह्निसम्पूजनं कृत्वा वह्निहोममवाप्नुयात्।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम्॥
सम्पूज्य च ऋषीन् यत्र सोमयज्ञाश्च ये कृताः।
तदा प्राप्नोति तानेव गतिमव्याञ्च विन्दति॥
सप्तम्यां चतुराहूँश्च इष्टमभ्यर्चयेन्मुनिम्।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम्॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत्।
धीदाश्चैव तथैवाप्सां मतिमप्रमितां लभेत्॥
गङ्गां सप्तप्रकाराश्च तथा देवीं सरस्वतीम्।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै ध्रुवम्॥
आदित्यं पूजयित्वा वै क्षिप्रं रोगैः प्रमुच्यते।
सप्तम्यां चाद्भमेक मतिमव्याञ्च विन्दति॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम्॥
नरेन्द्रपूजनं कृत्वा मतिमग्र्यां तथा लभेत्।
अनन्तं प्रकृतज्ञं पूजयित्वा सुखी भवेत्॥

अष्टम्यां पूजनं कृत्वा वसूनां धर्म्मवित्तम:[1] ।
नाकलोकमवाप्नोति बलिञ्च[2] मनसेप्सितम् ॥
चतुष्पथेषु रथ्यासु तथैवोदूखलेषु च ॥
गिरिप्रस्थेषु रथ्यासु नदीतीरेषु चाप्यथ ।
गुहासु च नवां रथ्यां[3] पिशाचानां बलिं हरेत् ॥
ब्रह्मादीनाञ्च देवानां कृत्वा सम्पूजनं ततः ।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः ॥
आयुधं पूजयित्वा तु तदा विजयमाप्नुयात् ।
दशम्यां पूजयित्वा वै विश्वदेवांस्तथा दश ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश ।
क्रियासु फलमाप्नोति यत्र यत्राभिजायते ॥
धर्मं सम्पूज्य देवेशं सर्व्वसत्त्वसुखावहम् ।
धर्म्मां गतिमवाप्नोति धर्म्मस्य फलमेव च ॥
एकादश्यान्तु संपूज्य रुद्रानेकादश प्रभो ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्व्वगतान् रुद्रान् सदा[4] सर्व्वत्र पूजयेत् ।
सर्व्वान् कामानवाप्नोति सर्व्वगानपराजितान् ॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः ।

---

(१) धर्म्मवित्तमत इति ग० । (२) बलिं चेप्समपि क्षिप्तमिति क्वचित्पाठः
(३) रथ्यां प्राप्येत्यर्थः । (४) यदेति ग० ।

द्वादश्यां सर्वमाप्नोति गतिमग्र्याञ्च विन्दति ॥
द्वादश्यां देवदेवेशं पूजयित्वा प्रजाधिपम् ।
पुण्डरीकमवाप्नोति वरुणं द्वादशीं पतिम् ॥
सर्व्वदेवेश्वरं ब्रह्मं पूजयित्वा तथा नरः ।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥
विष्णोः संपूजनं कृत्वा कामानाप्नोत्यभीप्सितान् ।
इष्टमग्र्यं फलं प्राप्य गतिमग्र्याञ्च विन्दति ॥
त्रयोदश्यामथाभ्यर्च्च कामदेवं जगत्पतिम् ।
सौभाग्यं महदाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्च्चयेत् ।
अर्चनात् सर्व्वमाप्नोति फलं संवत्सरोदितम् ॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम् ।
कृत्वा क्षेममवाप्नोति क्रियासाफल्यमेव च ॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ।
बहुवित्तमवाप्नोति फलं संवत्सरोदितम् ॥
शङ्ख-पद्मौ तथाभ्यर्च्च निधाने यक्षपूजिते ।
मणिभद्रं तथाभ्यर्च्च धनं प्राप्नोत्यसंशयम् ॥
पूजयित्वा महादेवं सर्व्वान् कामानवाप्नुयात् ।
आश्वमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥
तथा पितृगणान् राजन् चौपचन्द्रे तु पूजयेत् ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
श्राद्धं कृत्वा तथा राजन् सर्व्वान् कामानवाप्नुयात् ।

सर्वसिद्धं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥
दुष्टं प्रहमथाभ्यर्च्य गणमथवा नृप ।
तस्मात् क्षेममवाप्नोति कामञ्च यदुनन्दन ॥
मातृनाम्नः च गणं करणं सोममेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोपवासस्तु गणं गणेशमथार्चयेत् ।
गणपत्वमभावे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेयं महाभागं कृत्तिकास्वर्चयेन्नरः ।
अग्निष्टोममवाप्नोति कुवच्चैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्य यक्षं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्य भियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्य भाग्यं सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते ब्रह्मा सायुज्यमाप्नुयात् ॥
दृष्टपद्मार्चितं देवं तस्मानं यक्षमेव च ।
गन्धर्वं वा यक्षं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्दश्यां महाकालमथार्चयेत् ।
सर्वान् कामानवाप्नोति तथैश्वं नात्र संशयः ॥
महेश्वरं मातृगणं तथा वह्निं प्रपूजयेत् ।
पूर्वां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा तुम्बुरगन्धर्वपञ्चकं पूजयेन्नरः ।
सर्वत्र जयमाप्नोति नात्र कार्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्षदांस्तथा ।

आरोग्यं मध्वाप्नोति यद्वा वा मनसेप्सितम् ॥
नृसिंहप्रतिमायैव पूर्वयत्नं समर्चयेत्।
नरो माहृगणान् राजन् सर्वकाममनोरमान् ॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान्।
नागरत्नमवाप्नोति पूजयित्वा वनस्पतीन् ॥
देवानां मानवानाञ्च तत्पदा ये तथापरे।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत्।
तस्मात् काममवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
संवत्सरेण धर्मज्ञ नक्षत्रे यदि वा तिथौ।
एतेषु सर्वधर्मज्ञ सोपवासः समाहितः ॥
संवत्सरे चायने ऋतौ मासे च तद्दिने।
नक्षत्रे संयतः पूजां कृत्वा तत्स्नानिनः सदा।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥
चैत्रात् समारभ्य महानुभाव
दोषेत यत्नं सुरमर्चयानः।
तत्रैव तोषात् परमं च कामम्
आप्नोति तस्मात् यदुवंशचन्द्र ॥

इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा।

---

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

देवता यस्य भस्य यदा तुष्टिमिता तदा ।
असौ यज्ञदेवस्तु तदा च फलभाग् भवेत् ॥
देवताश्च प्रवक्ष्यामि भचाणां यथाक्रमम् ।
नक्षत्राणि च सर्वाणि यज्ञांशेव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ठा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीड़ितः ॥
भरण्यां यममभ्यर्च्य कुसुमैरचितैः शुभैः ।
तथा गन्धादिभिः शुभैरपमृत्योर्विमुच्यते ॥
अनलः कृत्तिकायान्तु यष्टिं सम्पूजितः पराम् ।
[१]रक्तमाल्यादिभिर्दद्यात् स्तहोमेन च ध्रुवम् ॥
रुद्रः प्रजापतिः पूज्य रुद्रान् दद्यात्पशूंस्तथा ।
रोहिण्यां देवमापूर्य दद्याच्च हरिकृष्णरान् ॥
मृगशीर्षे तथा सोमं यजमारोग्यमेव च ।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमश्नुते ॥
चित्रैः पद्मादिभिर्बुध्यैर्देवतं पयसा च वै ।
पुनर्वसौ चाप्यदितिं यदा सम्पूजनादिभिः ॥
पश्येत तर्पिता चैव तानेव परिरक्षति ।

(१) रक्तेति ग० ।

तिष्ये बृहस्पतिर्वृद्धिं ददाति विपुलं धनम् ॥
पान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विजयन्दद्यात् पूर्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्यात् कन्यायाः पुरुषस्य च ॥
इष्ट जन्मानि चाप्नुयादुत्तरस्यां तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
गन्धैः पुष्पादिभिः सर्वैर्ददाति विपुलन्धनम् ।
राज्यं त्वष्टा च चित्रायां निःसपत्नं प्रयच्छति ॥
स्वात्यां सन्तर्पितो वायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं चेन्द्रौजांसि निवसेत् सदा ।
अनुराधां समासाद्य मित्रं सम्पूज्य भक्तितः ॥
प्रियो भवति सर्वेषां निर्व्याजं चित्तमाप्नुयात् ।
ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गुणैः सर्वैश्च सम्पूज्य कर्मणा च धनेन च ।
मूले तु निर्ऋतिं सम्यक् भक्त्या सम्पूज्य पूर्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादिः संयोगविशेषे देवता-विशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
सप्तक्षेमं महापुण्यं नक्षत्र-तिथियोगिकम् ॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम् ।
चतुर्वर्गस्य भाग्यस्य समया भृगुवासरे ॥
देवपीडाप्यदा षष्ठी पुष्यर्क्षे रविवासरे ।
स्कन्दयागस्तदा कार्य्यः सर्व्वकामप्रसाधकः ॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा ।
तदा सम्भवते भानोर्य्यागः सर्व्वगुणावहः ॥
अश्विनिश्रवणायोगे आर्द्रर्क्षे मातृपूजनम् ।
मायायाः कालिकायाश्च यष्टव्या विधिना मुने ।
सम्पूर्णं फलमाप्नोति खस्थाने खेचरो भवेत् ॥
पुष्पैरिष्ट्वा यक्षं मैत्रैः पूर्वाविधेन च पूर्ववत् ।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा ॥
आषाढास्तु तथा विद्यादुत्तराषाढयोगतः ।
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः ॥
श्रवणे लक्षिते विष्णोः पुष्पैर्धूपैश्च भक्तितः ।
अनन्तं श्रियमाप्नोति धनं विजयमेव च ॥
धनिष्ठायां वसूनिष्ट्वा न भयं विद्यते क्वचित् ।
महान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः ।

यस्त्वत्र समभ्यर्च्च व्याधिभिर्मुच्यते ध्रुवम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्नं पराम्प्रीतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
सितैः पुष्टिं क्षितिं चैव धृतिं विजयमेव च ।
अत्र चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्व्वमाचरेत् ।
एवं कृते हि तत्सर्व्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपं कुर्य्याद्धोमं कुर्य्याद्यथेप्सितम् ॥

इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।

शिवधर्म्म-भविष्यपुराणयोः ।

पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेवं च कार्त्तिक्यां पूज्य शम्भुं समापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सुवर्णवस्त्रादिपूर्विकाम् ॥
यः कुर्य्यात्प्रत्यब्दमेवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुण्यक्षयात्परिभ्रष्टश्चतुर्वेदश्च जायते ।
इहागतो नरेन्द्रो वा गुणरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्दश्यामथाष्टम्यामधिवास्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्रं(१) स्यात्तस्य संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य रिक्तः सम्पूर्णतामियात् ॥
पवित्रान्तु पवित्रन्तु शाम्भवं भृगुनन्दन ।
अपवित्रं पवित्रं स्याद्दैवकर्माश्रितं नृणाम् ॥

कालोत्तरे ।

पूजां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासद्वयान्तरे ॥
आषाढ़ान्ते चतुर्दश्यां नभस्य-नभसोस्तथा ।
अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोः समम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे स्थितम् ॥

---

(१) अपवित्रमिति भावप्रधानो निर्देशः अपवित्रत्वमित्यर्थः ।

एवं काले त्वतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
भौतिकानां विशेषेण शुक्लपक्षे क्रमं विधिः ॥

'आषाढ़ाद्ये चतुर्द्दश्यामिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढ़शुक्लचतुर्द्दश्यामित्यर्थः ।

तथाच मोक्षचौरोत्तरे ।

आषाढ़स्य तथादिष्टा श्रावणस्य सिताश्रिता ।
समस्ताश्च चतुर्द्दश्यां तत्र सन्ध्यपवित्रकम् ॥
चतुर्द्दश्यां प्रकर्त्तव्यं पवित्रं मन्त्रसंयुतम् ।
पवित्रमथ भक्तानामाषाढ़नियमः स्मृतः ॥

एवं चत्यपि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढ़ेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽपवित्रतश्चात्र सूचितां विधिवित्तमैः ॥
शुक्लाषाढ़चतुर्द्दश्यां कुर्य्याच्छ्रावण-भाद्रयोः ।
माघ चतुर्द्दश्यां पक्षयोरुभयोरपि ॥

नन्वाषाढ़चतुर्द्दश्यामित्यनेनैव(१) विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति प्रसुप्त एव मधुसूदन इति । सत्यम् । किन्तु आषाढ़स्यापि द्विविधत्वात् सौरचान्द्रे तत्र चान्द्रे कर्त्तव्यं स्यादिति पुनरधिकमासे सौरमासिककर्कटस्थकालेनेव विष्णुः स्वपितीति तदुक्तमिति न दोषः ।

(१) न आषाढ़चतुर्द्दश्यामित्यनेनैवेति ख० ।

उक्तञ्च ज्योतिःशास्त्रे ।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति ।

तथा ।

दर्शद्वयमतिक्रम्य यदा सङ्क्रमते रविः ।
अधिमासः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

इति वचनाच्च । पूर्वाषाढ़े पवित्रं न कुर्वीतेत्यभिप्रायः । यदा तु चैत्रादिषट्सु मासेष्वन्यतमस्मिन्नधिकमासे द्विराषाढ़ः स्यात्तदा श्रावणे विष्णुस्वापः ।

तथाच ज्योतिःशास्त्रे ।

माधवादिषु षट्सु एकमासे दर्शद्वयं तदा द्विराषाढ़स्तदाऽपि स्वापैव श्रावणे व्यूढः, अतस्तदा श्रावणादौ पवित्रारोपणं परं कार्य्यम् ।

उक्तञ्च मोहचौरोत्तरे ।

दीक्षादिस्थापनान्तञ्च पवित्रादि व्रतक्रतोः ।
पवित्रादि न कुर्वीत यदीच्छेच्छुभमात्मनः ॥
दर्शद्वयं भवेद्यत्र रविसङ्क्रान्तिवर्जितम् ।
अधिमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
तुलमासेऽधिमासे च कर्त्तव्यन्तु पवित्रकम् ।
सुप्ते चैव हृषीकेशे दोषभागन्यथा भवेत् ॥

ननु किं चान्द्रमासेन सौर एव ग्राह्यो भवेत् तथाधिकमासस्य प्रसक्तिश्च, नैवं । प्रायेण पवित्रारोपणे चान्द्र एव मासोऽभिमतो न तु सौरः, कन्यागते रवौ प्रायश्चित्ताभिधानात् ।

आषाढ़ादिषु मासेषु सुप्त एव जनार्दने ।
शुक्लपक्षेऽथवा कृष्णे प्रशस्ता सूपरोपणे ॥
रोगाभिवृद्धिसंयुक्तः प्रवासी राजपीड़ितः ।
उक्तमासचये यस्तु न कुर्यात् सूपरोपणम् ।
षष्ठी कन्यागते भानौ यथा दृषायुना युतम् ॥

'दृषायुना' प्रकोरमन्नेष ।

कुर्यात् पवित्रकं प्रभोस्तुलायां न कथञ्चन ।
मलिम्लुचं परित्यज्य सर्वकर्मसु गर्हितम् ॥

कारणे ।

आषाढ़ादिचतुर्मासास्तदन्यानि विवर्जयेत् ।
कर्त्तव्यं पक्षयोः शुक्ल-कृष्णयोरुभयोरपि ।
चतुर्दश्यामथाष्टम्यां रोपयेत्तु पवित्रकम् ॥

रत्नावल्यां ।

यदा त्वेकदिने प्रभोः पवित्रायं चिकीर्षति ।
कृतनित्यस्तदा सन्ध्यां कृत्वा नैमित्तिकीं सकृत् ॥
सम्यग्गन्धाद्यकं कृत्वा पवित्रं पूजयेन्नरः ।
यदा स्वकृतिथिस्तत्र तदा तत्तिथिभागयोः ॥

यदा चतुर्दशी पौर्णमास्यंशमिश्रा तदा कालान्तरे ऽभिहितम् ।

यदा तत्रैव कर्त्तव्यं यदि सम्पतया तदा ।
गौरोपान्तरितं कृत्वा वाधिवासं पवित्रकम् ।
चतुर्दशीक्षणे कुर्यात्चैवं प्रेषतिथौ चरेत् ॥

सप्तम्यां वा चतुर्दश्यां कृत्वा गन्धपवित्रकम् ।
अष्टम्याञ्च चतुर्दश्यां कुर्य्यात् पवित्रकं तथा ॥
अपरेऽहनि कर्त्तव्यं सुपवित्रमिति स्थितिः ।
अथ दार्श्यां दिनैकेन कर्त्तव्यञ्चापरे जगुः ॥
अधिमासत्रयोदश्यामपरेऽह्नि विधिक्रमम् ।
गोदोहान्तरितं कृत्वा यदि स्यात् व्ययमानवः ॥
चतुर्दशीक्षये कुर्यात् चाधिवासं पवित्रकम् ।
सुपवित्रं पौर्णमास्यां तिथिभेदे त्वयं विधिः ।
अष्टम्यामपि बोद्धव्यः क्रमोऽयं सूत्ररोपणे ॥

इति शैवपवित्रारोपणकालः ।

---

## अथ विष्णुपवित्रारोपणकालः ।

तत्र पवित्रारोपणं काम्यं नित्यञ्च ।
तत्र विष्णुरहस्ये ।

पवित्रारोपणं विष्णोर्भुक्ति-मुक्तिप्रदायकम् ।
स्त्रीपुंसोर्नित्यदं पुण्यं सुखसम्पद्गुणावहम् ॥
सुस्नानान्तु तथा पुण्यं सर्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
संवत्सरे नरो भक्त्या यमभ्यर्च्य जनार्दनम् ।
यत्फलं समवाप्नोति पवित्रारोपणेन तत् ॥
न करोति विधानेन पवित्रारोपणन्तु यः ।

तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥
तस्माद्भक्तिसमायुक्तैर्नरै-र्विष्णुपरायणैः ।
वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः ॥

मन्त्रप्रकाशे तु ।

पवित्रारोपणं वक्ष्ये वर्षपूजाफलप्रदम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ।
विधिना शास्त्रदृष्टेन यो न कुर्यात् पवित्रकम् ॥
वर्षे वर्षे ततः कार्य्यं विधिदृष्टेन वर्त्मना ।
भक्त्या परमया युक्तो हरिप्रीत्यै पवित्रकम् ॥

तस्मादावश्यकं पवित्रारोपणकर्म्म आचार्य्य कामनानुसारेणायुरादीन्यपि फलानि भवन्तीति द्रष्टव्यम् ।

विष्णुरहस्ये ।

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायान्तु गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन ॥

तथा ।

शरद्दर्शासु कुर्वीत पवित्रारोपणं शुभम् ।
द्वादश्यां श्रवणे चापि पञ्चम्यामथवा द्विज ।
अष्टम्यामेव कर्त्तव्यं चतुर्दश्यामथापि वा ॥

मन्त्रतन्त्रप्रकाशे ।

कर्कटकगते सूर्य्ये तथा सिंहगतेऽपि वा ।

द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात् पवित्रकम् ॥
अथ चेद्विघ्नयोगेन मुख्यकालो न लभ्यते।
कन्यास्थापि प्रकुर्वीत यावन्नोत्तिष्ठते हरिः ॥

वाल्मीकसंहितायाम्।

तच्च मासचतुष्कस्य मध्ये कुर्याच्छुभे दिने।
आषाढीपञ्चदश्यास्तु यावद्वै कार्त्तिकस्य च ॥

सम्पूर्णपञ्चदिवसं इति।

आकर्कोटकपक्षान्तेस्तुलाभोगस्य यावधि।
कालान्तमस्य पक्षस्य सौरं मध्यमसंज्ञितम् ॥
एकादश्यादसंस्थायचातुर्मास्योपलक्षितम्।
कालान्तं वैष्णवं विद्धि उत्तमं सर्वसिद्धिदम् ॥
अप्राप्तेरस्य कालस्य त्वन्तरायेण केनचित्।
निर्वाहणीयोऽपरः कालस्यात्क्रमवादिना।
सम्पादयेच्चतुर्मध्ये विधिवद्योगपूर्वकम् ॥

इति विष्णुपवित्रारोपणकालः।

---

## अथ नानादेवतापवित्रारोपणकालः।

तत्र माघा वैष्णवोक्ता एव तिथिषु विशेषः।

तत्त्वसागरसंहितायाम्।

प्रतिपद्धनदस्योक्ता द्वितीया च श्रिया मता।
तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः ॥

पञ्चमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता ॥
मातॄणां नवमी प्रोक्ता वासुके[1] र्दशमी स्मृता ।
एकादशी मुनीनाञ्च द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी ।
पौर्णमासी सुरश्रेष्ठ पितॄणां कथिता तिथिः ॥
देव्याश्चित्रपुरभैरव्याः कथिता तु चतुर्थिका ।
अन्यासामपि नित्यानामष्टमी नवमी स्मृता ॥
तिथयश्च समाख्याताः पवित्रारोपणे शुभाः ।
पञ्चम्यामिन्द्रलिङ्गेषु नित्यत्वेन समर्चयेत् ॥
पवित्रारोपणं तत्र पृथक्सुत्रतयेरितम् ।
भवेत् द्वयस्य सम्पत्ते र्द्वयस्यापि तथा भवेत् ॥
यस्य सुस्थतया देव प्रोक्तं तत्तत्तिथौ भवेत् ।
इति क्रमः समाख्यातः शृणु सूर्यं सुराधिप ॥

विष्णुरहस्ये ।

तिथयः सुप्रविख्याताः पृथगुक्तास्तपोधनाः ।
प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः ॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः ।
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य तु ॥
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करे प्रोक्ता दुर्गायाश्चाष्टमी स्मृता ॥

---

(१) वासुकेर्दशमी स्मृतेति ख० ।

मातृणां नवमी प्रोक्ता दशमी वासुकेः स्मृता ।
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः ॥
त्रयोदशी अनङ्गस्य शिवस्योक्ता चतुर्दशी ।
मम देव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता ॥
यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य तु ।
सर्व्वेषामेव देवानां कार्य्यन्तासु यथाविधि ॥

तथाच कालोत्तरे ।

विशेषेणोच्यते[१] वत्स प्रतिपत्प्रभृतिक्रमात् ।
वह्नेस्तु ब्रह्मणो गौर्य्या गणेशादिषु पञ्चमी ॥
षण्मुखस्य तु सूर्य्यस्य शिवस्याप्यष्टमी सिता ।
अम्बिकायाः कलान्तस्य रुद्रायाश्चक्रपाणिनः ॥
कामस्य च त्रयोदश्यां चतुर्दश्यां शिवस्य च ।
पितृणाञ्चैव पूर्णायां गुरुयोगस्य कारयेत् ॥
चतुर्दश्यामथाष्टम्यां पर्व्व साधारणं सितम् ॥

देवीपुराणे देवीमधिकृत्य ।

अथवाषाढ़मासे तु श्रावणे वापि कारयेत् ।
सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप ॥
इति नानादेवतापवित्रारोपणकालः ।

---

## अथ दमनकारोपणकालः ।

देवीपुराणे ब्रह्मोवाच ।

चैत्रादौ कारयेत् पूजां मम वत्स यथाविधि ।

---

(१) विशेषकोत्तरे इति ख० ।

गन्धधूपार्घ्यमाल्याद्यैर्नैवेद्यैर्भक्ष्यभोज्यकैः ॥
सहोमं पूजयेद्देवं सर्वकामानवाप्नुयात्।
सर्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत्।
हविष्यान्नं नैवेद्यं देयं गन्धार्घ्यं पुनः।
फलमाप्नोति विप्रेन्द्र उमया यत् प्रभाषितम् ॥
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान्।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ॥
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपहारिकी।
इहैव सुखसौभाग्यमन्ते स्कन्दपदं व्रजेत् ॥
दशम्यां धर्मराजस्य पूजा कार्य्यातिगन्धिकी।
विगतारिर्निरातङ्क इह चान्ते परं पदम् ॥
एकादश्यामृषेः पूजा कार्य्या सर्वोपहारिकी।
धनवान् पुत्त्रवान् कान्त ऋषिलोके महीयते ॥
कामदेवस्य चोदश्यां पूजनीयो यथाविधि।
रतिप्रीतिसमायुक्तमशोकमपि भूषितम् ॥
कुम्भे वा चित्रवस्त्रे वा लेख्यपात्रे रत्नादिभिः ॥
पौर्णमास्यां तथा कार्य्या सर्वकामसमृद्धये ॥
इन्द्राय सहप्रियाय कायिकं लभते फलम्।
वस्त्रमिष्टं प्रयच्छेद् यः सौभाग्यमतुलं लभेत् ॥

इति दमनकारोपणकालः।

---

## अथ मासविशेषेण पुष्पविशेषाः।

आषाढ़े विल्व-कल्हारैरीप्सितं लभते फलम्।
नवमल्लिकया पूजा नभोमासि महाफला॥
कदम्बैरम्बकैरेवं नभस्ये सर्वकामदा।
आश्विने पङ्कजैः शुभ्रोर्नीलया पूजनं शुभम्॥
ईप्सितं लभते सर्वं सर्वकामफलप्रदम्।
माघ-फाल्गुनयोः पुष्पैः पूजनं कुन्द-कुङ्कुमैः।
चैत्रे दमनकेनापि पूजनं शतपत्रकैः॥
चन्दनैः कुसुमैर्वापि पूजनाच्च जगद्गुरोः।
पूर्णे संवत्सरे सर्वसिद्धिः समता भवेत्॥

भविष्यत्पुराणे।

पूजा चम्पक मालया इषेऽभ्युदयदायिनी।

'इषे' आश्विने।

शतपत्रिकया पूजा कार्त्तिके सार्वकामिकी।
मार्गशीर्षोत्पलैः पूजा पुष्पैः स्यात् कुब्जकैः शुभा॥
माघेऽथ कुन्दकुसुमैर्मरुवकेण फाल्गुने।
शतपत्रेण या चैत्रे यः कुर्यात्सुरसत्तम।
लभते सर्वयज्ञानां सर्वदानफलं तथा॥

इति मासविशेषेण पुष्पविशेषाः।

---

## अथ रात्र्यादिभेदेन पुष्पभेदाः।

कमलानि कदम्बानि रात्रौ देयानि प्रहरे।

दिवाशेषाणि देयानि दिवारात्रौ च मल्लिकाः।
प्रहरत्रितये जाती करवीरमहर्निशम्॥

प्रहरमहर्निशं वा पूजायां ज्ञापनानन्तरकुमारवीर्यमित्यर्थः।

कामिकाकारणयोः[१]।

नन्द्यावर्त्तं शिवावर्त्तं श्वेतार्कं श्वेतपुष्पकम्।
पुन्नागं पाटलिकं चोड्रं मालतीमुदये हरेत्॥
पङ्कजं वृहतीं व्याघ्रीं व्याघातं करवीरकम्।
उत्पलं पाटलीं द्रोणं मध्याह्ने तु प्रदापयेत्॥
चम्पकं वेदकं भद्रां धुस्तूरं वरकर्णिकाम्।
मालतीं मल्लिकाञ्चैव दापयेत्तु प्रदोषके॥
जातीं नीलोत्पलञ्चैव पुष्पं कुन्दं कदम्बकम्।
दिवर्णञ्चैव भद्रञ्च चतुर्थयामे प्रदापयेत्॥
नीलोत्पलसमं पुष्पं न भूतं न भविष्यति।
कदम्बं जनकं जाती देयं ज्ञात्वार्धरात्रके।
अन्यपुष्पाणि सर्वाणि चान्यसन्ध्यासु दापयेत्॥

इति रात्र्यादिभेदेन पुष्पभेदाः।

---

## अथ सार्वकालपुष्पाणि।

विल्वपुष्पं शमीपुष्पं करवीरञ्च मालती।
कमलकं चम्पकञ्च सदा प्रीतिकरं मम॥
चम्पकाशोक-पुन्नागाः बकुलहारास्तथा मम।

---

(१) कामिककारणयोरिति ख०।

59-3

सर्व्वदा द्विजशार्दूल ये चान्ये मङ्गलप्रियाः ।
एतैर्हि पूजितो नित्यं प्रीतिं प्रीत्रं प्रयात्यजम् ॥
यैः केवांपीह कुसुमैर्जल-स्थलरुहैः शिवम् ।
संपूज्य प्रोषितो भक्त्या शिवलोके महीयते ॥

इति कालविशेषेण शिवपुष्पविशेषपूजनम् ।

---

## अथ पुष्पादीनामभावे पत्रादिभिः पूजा कार्य्येऽति-निरूप्यते ।

स्कन्दपुराणे ।

अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ।
शालितण्डुलगोधूमैर्य्यवैर्वापि समर्चयेत् ।
गाणपत्यमवाप्नोति रुद्रलोके वसेच्चिरम् ॥

भविष्यपुराणे ।

अभावेन हि[१] पुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यभावे तु फलान्यपि निवेदयेत् ॥
फलानामप्यभावे तु तृणगुल्मौषधीस्तदा ।
औषधीनामभावे तु भक्त्या भवति पूजितः ॥

इति पुष्पाद्यभावे पत्रादीनां पूजासाधनत्वं निरूपितम् ।

---

(१) अभावेनेत्यत्र विशेषणे तृतीया, पुष्पाभावविशिष्टः सन्नित्यर्थः ।

## अथ सामान्यतः क्षुद्रकर्मकालः।

नारायणीये।

कुलिकः स्थविरो योगस्तारा वैनाशिकः कुजः।
अष्टमोराशिरित्याद्याः कालाः स्युः क्षुद्रकर्मणीति॥

कुलिकस्तावत् शनैश्चराद्यादयः अष्टौ दिनाधिपमुख्योदयिनो दिवा सायं वा परार्द्धमुदितं कुलिकोदयाख्यम्[१]। प्रपञ्चितश्चायं विषहरप्रकरणे।

स्थविरोनाम

गुरुस्थांशके चैव तयोरेव दिनं यदि।
तद्दिने स्थांशके रिक्ते रोगर्णादिप्रतिक्रिया॥

ताराश्च

तिस्रश्च पूर्वा भरणी मघा च
पञ्चोग्रवीर्याणि वदन्ति तज्ज्ञाः।
रौद्रेन्द्र मूला-रग-दैवतानि
क्रूराणि तेषूग्रपरिग्रहः स्यात्॥
वैनाशिकं चयोविंशं वराहमिहिरोदितम्।
द्वाविंशकन्तु मन्त्राद्यैरष्टाशीत्येकशन्दितम्॥

'कुजः' अङ्गारकदिनम्, 'अष्टमोराशिः' उत्पत्तिकाले यस्मिन् राशौ चन्द्रो वर्त्तते तस्यैवाष्टमो राशिकालः। आदिशब्देन कला-तिथिवेलाग्रहणम्। तत्र कला नाम शुक्लपक्षे चन्द्रकला वर्द्धन्ते क्षीयन्ते च कृष्णपक्षे तत्रापि क्षयकालेऽष्टमीमारभ्यामावास्यापर्यन्तं

---

(१) पाठोऽयं आदर्शसम्मत एव मुद्रितः परन्त्वयं न समीचीनः।

कुर्य्यात्। 'तिथयः' चतुर्थ्यादयः, चन्द्रोदयमारभ्य पञ्चदशघटिकापर्य्यन्तं समुद्रस्य क्षोभो भवति सा चन्द्रवेला, नाम तदा वश्यादिकर्म न कुर्य्यात्। तदारभ्य पुनः पञ्चदशघटिकापर्य्यन्तं वेला नास्ति, तदा सर्वं कुर्य्यात्।

इति सामान्यतः क्षुद्रकर्मकालः।

## अथ वश्यादिकर्मविशेषेषु कालविशेषः कथ्यते।

मन्त्रतन्त्रप्रकाशे।

शिशिरादिऋतूनां कर्माणि तत्र कथ्यते।
आचार्य्यैः कथितं पूर्वैः कर्मणां सिद्धिकारणम्॥
दिनादियामिनीप्रान्ते ऋतवः षड्व्यवस्थिताः।
शिशिराद्याः समारभ्य नाडीर्दश दश क्रमात्॥
आरक्तधवलो बालः शिशिरो वश्यकर्मणि।
उच्चाटनेऽथ विज्ञेयो वसन्तो लोहितो युवा॥
ग्रीष्मो धूम्रशरीरश्च मारणे च नियुज्यते।
प्रावृट् धूम्रशरीरा तु स्तम्भने वा नियोजिता॥
शरत् कृष्णा मताकृष्टौ मन्त्रज्ञैर्गुरुपूजकैः।
हेमन्तो धवलो वृद्धः शान्तिपुष्ट्यादिकर्मकृत्॥

मन्त्रतन्त्रे।

नीलाम्बरे जपेत्काले मन्त्रं पूर्वाह्णिकेऽथवा।
मध्याह्नादस्तमयं काले पूर्वाह्णिकेऽथवा॥
तथा काले च पूर्वाह्णे वश्यार्थी प्रजपेन्मनुम्।
आकर्षणे निशि शेषं यामात् पूर्वन्तु तत् द्विजैः॥

मन्त्रतन्त्रप्रकाशे ।

पूर्वाह्णे शुभदं कर्म प्राह्णे वापि निगद्यते ।
वश्योच्चाटनं नाम आकृष्टिः शान्तिकं तथा ।
आयुषो वर्द्धनञ्चेति षट्शुभानि प्रचक्षते ॥

मन्त्रतन्त्रे ।

प्रदोषे बुद्धिनाशाय स्तम्भनञ्चापराह्णिकम् ।
विद्वेषाय जपेन्मन्त्रं मध्याह्ने तु ज्वराय च ॥
उच्चाटनार्थाय जपेन्मध्याह्नात् परतो मनुम् ।
मारणं तु प्रकर्त्तव्यं यामादूर्द्ध्वं तृतीयकात् ॥

इति वश्यावश्यादिकर्मविशेषेण कालविशेषः ।

---

## अथ विष्णुशयनादिकालनिर्णयः ।

तत्र भविष्यत्पुराणे ।

आभाकाषितपक्षेषु मैत्र-श्रवण-रेवती- ।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवः ॥

नारदीये ।

मैत्राद्यपादे स्वपितीह विष्णुः
श्रुतेश्च मध्ये परिवर्त्तमेति ।
पौष्णावसानेन सुरादिवन्द्यो
प्रबुध्यते मासचतुष्टयेन ॥

अल्पकार्येषु मासेषु मधुरे माधवस्य च ।

द्वादश्यां शुक्लपक्षे च प्रबोधापावर्त्तनोत्सवः ॥
पौष्णपौषे यदा नास्ति मैत्राद्यमपि नोनिशि ।
द्वादश्यामपि नो कुर्यात् उत्थानं शयनं हरेः ॥

द्वादश्यां तथा कुर्य्यादिति पठित्वा ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥

विष्णुधर्म्मोत्तरे ।

विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

पुराणात् ।

उत्थाने शयने चैव तथा पार्श्वविवर्त्तने ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

वाराहपुराणे ।

न पादनियमस्तत्र स्वापे वा परिवर्त्तने ।
पादयोगो यदा तत्र चक्षेणापि तदा भवेत् ॥

मत्स्यपुराणे ।

रेवतीचक्षपर्य्यन्तं मेचचन्द्रावलोकिते ।
उन्निद्रन्तं हृषीकेशं योगनिद्रा विमुञ्चति ॥
रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥
रेवत्यादिरथान्तो वा द्वादश्या च विना भवेत् ।
उभयोरप्यभावे तु सन्ध्यायां तु महोत्सवः ॥

पुराणात्।

रेवत्यन्तो यदा राचौ प्राप्ते नारायणोत्सवे।
पादयोगमनादृत्य स्वप्न एव प्रवर्त्तते॥
रेवत्यन्तो यदा राचौ गतः पादान्तरेऽपि च।
अपराह्णे तदा विष्णुर्योगनिद्रां जपोहति॥
रेवत्यन्तो यदा राचौ द्वादश्या च विना भवेत्।
उभयोरप्यभावः स्यात् सन्ध्यायां तु महोत्सवः॥

वाराहपुराणे।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।
आभाकाषितपक्षेषु शयनावर्त्तनादिकम्॥

अयमर्थः।

हरिशयनादौ शुक्ला द्वादशी आषाढ़-भाद्रपद-कार्त्तिकाना-मनुराधा-श्रवण-रेवतीनाम् आदिमध्यान्तपादयुक्ता रात्रिसन्ध्या दिवाक्षणयुक्ता च प्रशस्ता, यदा तु यथोपदर्शितकाले पादयोगो न प्राप्यते तदा द्वादशीनक्षत्रयोग आदरणीयात्[१]। पादयोरभ-योत्सवेन चायं विशेषः। दिवा रेवती-द्वादशीयोगे रात्रि-गामिनि नक्षत्रे शेषदिनान्ते विष्णोरुत्थानं यदा तु रेवत्या विना द्वादशी तदा द्वादशीसन्ध्यायामुत्थानादिकं भवति।

तदुक्तं।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।
आभाकाषितपक्षेषु शयनावर्त्तनादिकमिति॥

(१) आदरणीय इत्येवं पाठो युक्तः।

अत्र केचिदाहुः ।

यदि मैत्रादीनि नक्षत्राणि द्वादश्यां विहाय त्रयोदश्यां भवन्ति तदा चतुर्दश्यां तदनन्तराणि ज्येष्ठादीनि ततः पौर्णमास्यां तदनन्तराणि मूलादीनि, तथा सति आषाढ़ इति विरुध्येत तच्च नक्षत्रयुक्ता पौर्णमासी सन्धिज्येष्ठादिप्राप्तेः भाद्रपदमासस्य यथाकथञ्चित् प्राप्यते, "आद्योपान्तौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मतः । शेषा मासा द्विभा ज्ञेयाः"॥ इति वचनात् । न धनिष्ठा ज्येष्ठादौ हरिशयनादि भविष्यति ।

यदुक्तं विष्णुधर्मोत्तरे ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति ॥

आचारसारे तु "द्वादश्यामृक्षसङ्गमादिति पठितम् । तेनान्यतिथिगतमैत्रादौ पादसम्बन्धे कटद्वादश्यां सन्धिसमये शयनादिक्रिया ।

अत्र श्रीकरः प्राह(१) यदा गतकाले अमावस्याद्वयं भवति तदा मिथुनादितरेष्वाषाढ़ीभावात् सुप्तचन्द्रसूर्य्ये पञ्चवारशयन-रेवत्यादयो यदि वा चतुर्दश्यां भवन्ति तदापि चक्रयोः सर्वोत्थानविलोकप्रतिहेतव दुर्लक्षणम् । तदा(२) द्वितीये नक्षत्रप्राप्त्यानुसवे क्रियमाणे पञ्चममासप्राप्तौ "प्रबुध्यते मासचतुष्टयेनेत्यस्यानुपपत्तेः पादयोगादन्यथाप्यत्यय एव कल्पनादनादरणीयः । द्वादश्यां सन्धिसमय इति तु माथुरकल्पाश्रयणेनोक्तम् । दिवा हि वैष्णवाना-

---

(१) श्रीकरमतं आदर्शसम्मतमेव मुद्रितं परन्त्विदमादर्शदोषेणात्यन्तापरिशुद्धमिति । (२) तथेति गचिह्नितपुस्तके पाठः ।

मनुष्ठानं कल्पः माथुरस्य तदितरस्य तत्। माथुरो द्वादशीपुरस्कारेण नक्षत्रसम्बन्धप्रेक्षणेन च इति तु नक्षत्रपादयोगपुरस्कारेण द्वादश्यपेक्षावशेन च तिथिनक्षत्रमेलनं च पक्षद्वये प्रशस्तं तेन वैदिकशाखाविकल्पन्यायेनोपपत्तिः। तदायं तिथि-नक्षत्रवशेनानुष्ठानविकल्पः। कथं तर्हि हरिशङ्करयोः सहोत्थानेत्यस्य नान्यातिथिरस्ति तस्मात् सर्वमनाकुलमिति। अत्र पण्डितपरितोषकृता दूषणमभिहितं अनुपपन्नमेतत्, तथा हि पादयोगादन्यतिथौ द्वादश्यामृक्षयोग इत्यस्य कोऽर्थः, द्वादश्या अन्या एकादशी त्रयोदशी एकादशी-द्वादशीतुल्ये च न तथा नक्षत्रसंयोग-पादयोगादरः। तदुक्तं विष्णुधर्मोत्तरे।

एकादश्यां द्वादश्यां च नित्यं सन्निहितो हरिः।
तत्र नक्षत्रसंयोगे पादयोगो न कारणमिति॥

अथ त्रयोदश्यामिति वक्तव्यं तथासत्याभाका इति विरुध्यते। न च कार्त्तिकशब्दोमासचतुष्टयप्रबोधनानुरोधेन प्रायिकः "आभाका-इत्यक्षरे बह्वायासप्रसिद्धस्य नियतत्वान्मासचतुष्टयेनेत्यस्यैव प्रायिकानुवादत्वं युज्यते। तथा च कार्त्तिकोदयप्राप्तानुत्तरमासाश्रयणेन कार्त्तिक एव विष्णुप्रबोधे सत्यपि मिथुनादित्ये स्वपने अधिमासे सति पौर्णमासीदयस्य सम्भवात्। पञ्चभिरपि मासैरुत्थानं न विरुध्यते। यस्यापि दिवसैर्मास इति षट्संख्योपपत्तिः, विराषाढे विवेचकं दर्शयिष्यामः। न च हरि-शङ्करयोः सहोत्थानमिति लोकप्रसिद्धिर्नियामिका, तस्याः शास्त्रप्रसिद्धितो दौर्बल्यात्। किञ्चैवंवादिना शयने किं वाच्यं यदानुरोधात्कालप्रमाणं दर्शाधिक्ये भवति

तदा किं तत्रैव हरिशयनं उताषाढ़ अपेक्षणीयः। तथापि चतु-र्द्दश्यां नक्षत्रप्राप्तौ हरि-शङ्करयोः शयोत्थानमिति लोकप्रसिद्धिर्नि-यामिका, तस्याः प्रामाण्यं किं लोको न भवति, मिथुनादित्ये वा चतुर्द्दश्यामनुराधाप्राप्तौ तत्राषाढ़शुक्लपौर्णमासीवर्जितमासापेक्षित-तद्योत्थाने कथा युक्तापि कृता तस्याश्चयनादावाषाढ़प्रतिनियमात् ज्येष्ठादौ नक्षत्रलाभेऽपि शयनादिनिमित्तकरणं तदाधिमासपाता-सम्भवात् विराषाढ़कल्पनमाश्रित्य तदनुष्ठानान्तरव्यतिरेकेण तथाविधनक्षत्रप्राधान्यानुपपत्तेः यथापि भवति तथापि आभाका-रत्यस्यावश्यादरणीयत्वं। किञ्चैवंवादिना आश्विनेऽपि लोकप्रसिद्धिं पुरस्कृत्य देवोत्थापनमभिदधता स्वयं लिखितमपि प्रस्रतं यत्रापि द्विवर्षैर्मासो भवतीति तस्मादन्यथा वर्णनीयम्।

तत्र यदुक्तम्।

मित्रे स्वापोद्विवोत्थानं सन्ध्यायां परिवर्त्तनम्।

पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति॥

तस्यायमर्थः।

पादयोगादन्यस्यां चतुर्द्दश्यामपि पादयोगे सन्ध्यायां परिवर्त्त-नम्। द्वादश्यां नक्षत्रयोगे सति मित्रे स्वापोद्विवोत्थानं भवति। न पुनस्तत्रवादिकमप्यन्यतिथौ नक्षत्रपादयोगादेवं सति आभाका-रति मासचतुष्टयेनेति च द्वयमुपपद्यते, एवञ्चैकादश्यामपि नक्षत्र-योगे वचनान्तरबलेन शयनाद्याचरणीयम्। यत्तु "द्वादश्यामेव तत् कुर्य्यादिति, तस्यातुरकल्पाश्रयणेन, यदि द्वादशीं विहाय एकादश्यां नक्षत्रलाभः तथापि द्वादशीवर्ज्जितमव एव शयनादिकमनुष्ठेयम्।

यद्येकादश्यां नक्षत्रयोगो यदि वा यद्वोदश्यां सर्वथाभावकाप्राप्तौ द्वादश्यां सन्धिवशे शयनादिकं सन्ध्यायाश्च रात्रि-दिवसोभयात्मकत्वात् "निशि स्वापो दिवोत्थानमित्यपि नात्यन्तं विरुध्यत इति स एव मधुरमाधवकल्पेन नक्षत्रफलमस्तु एकादश्यां वा नक्षत्रप्राप्तौ प्रशस्ततमत्वेनान्यतरानुष्ठानं यद्वोदश्यां वापि कार्त्तिकाविरोधेनेत्युक्तमिति, तदेतदयुक्तं, "निशि स्वापो दिवोत्थानमिति वाक्ये भवदुक्तार्थस्वीकारे व्यवहितसम्बन्धप्रसङ्गात् अस्यार्थस्य वचनादप्रतीतेः तस्मात्सामान्तराभिमासनिपाते तुला-वृश्चिकयोर्विकल्पेन दिवोत्थापनविधायकवचनस्य वक्ष्यमाणत्वात्। तदभिप्रायेणास्य वचनस्यार्जवेनोपपत्तेर्न भवदुक्तार्थस्वीकारे कारणमस्ति। तेन श्रीकराणां मतमेव साधु। कार्त्तिकशब्दश्च मुख्य एवाविकल्पाभिप्रायेणोपपद्यते। यच्च कार्त्तिकस्याभिमासत्वे शुद्धकार्त्तिक एव विष्णुप्रबोध इत्युक्तं तदपि विकल्पस्य वक्ष्यमाणत्वादयुक्तम्। तस्माद्यथोक्तमेव साधीयः।

भविष्योत्तरे।

प्राप्ते भाद्रपदे मासि एकादश्यां शुभे दिने।

कटदानं भवेद्विष्णोर्महापातकनाशनम्॥

'कटदानं' शयानस्य विष्णोरङ्गपरिवर्त्तिकरणम्।

तथा।

कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः।

मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विजः॥

वाराहपुराणे।

इयन्तु द्वादशी देव प्रबोधार्थन्तु निर्मिता।

त्वयैवा सर्वलोकानां हितार्थं शेषशायिना ॥

एवमन्येषामपि देवानां स्वीयस्वीयतिथिविशेषेण नक्षत्रविशेषेण च शयनाद्याचरणीयमिति ।

तदुक्तं मत्स्यपुराणे ।

यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या ।
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकमिति ॥

केचित्तिथिविशेषेण केचिन्नक्षत्रविशेषेण सर्वेषां शयनादिकमाचरन्ति। प्रतिपदादिपञ्चदशतिथयो धनदादीनां देवानां, तथैकैव तिथिरनेकदेवताका यथा प्रतिपदग्नेर्ब्रह्मणश्च धनदस्य च। तथानुष्ठानविकल्प एवान्याय्यः सप्तविंशतिनक्षत्राण्यपि तत्तद्दैव व्यापीनीति गाणपत्यादीनां नक्षत्रविशेषेण च शयनादिकमाचरणीयम्। नक्षत्रतिथिनैयत्यं च रुद्रादीनां शयनादावाषाढादौ नोत्सवः, न हि कदाचिच्चतुर्दश्यामाषाढ्यां रौद्रमार्द्रानक्षत्रं सम्भवति। एवमन्यत्रापि द्रष्टव्यम्। तस्मात्तिथिविशेषेणैव तेषां शयनादिकं विदेशे तु नक्षत्रविशेषेणापीति।

पूर्वेद्युरुपवासः स्यात् पूर्वाह्णे स्वापबोधयोः ।
अपराह्णे यदा तौ तु तदहर्नियमं विदुः ॥

पूर्वाह्णमारभ्य रात्रिविशेष एव पूर्वाह्ण एवेत्युच्यते दिवास्वापस्य निषेधात्। एवमेव च रात्रावुदयमाने तु गरुडध्वजे पूर्वेद्युरुपवासः स्यादपरेद्युर्धर्ममाचरेत् इति बोद्धव्यम्।

काश्यपपञ्चरात्रे।

मदुत्थाने च शयने मत्पार्श्वपरिवर्त्तने ।
यच्च चोदीरितः कश्चिद्देवो भक्तितत्परः ॥

अन्नं वा यदि भुञ्जीत फलमूलमथापि वा।
अपराधमहं तस्य न क्षमामि कदाचन।
क्षिपामि नरके घोरे दुर्लभः संजायते क्षमाः॥

नैव यावद्भगवतो वासुदेवस्य शयनादिकालोऽवधारितः(१)।
अधिमाससन्निपाते तु कर्कटे वृश्चिके च पुण्यादिकमाचरणीयमिति।
तद्विधेः सङ्क्षेपादिकं विधीयते।

आह ज्योतिःपराशरः।

अतीते च दये सार्द्धे पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥
दिवसस्य हरत्यर्कः षष्टिभागमृतौ(२) ततः।
करोत्येकमहश्छेदं तथैवैकस्य चन्द्रमाः॥

एवं सूर्य्याचन्द्रमसौ उत्तरायणानन्तरं कालं दक्षिणायनात् प्राग्-वैशाखादौ गतिविशेषवशेनाधिमासं जनयतः। दक्षिणायनात् परः क्वचित्।

आह मरीचिः।

अधिमासो भवेद् यस्मिन् द्विराषाढो भवेत् तदा।
अमावास्याद्वयं दृष्ट्वा द्विराषाढं प्रकल्पयेत्॥

शातातपः।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

---

(१) पाठोऽयं न पूर्व्वापरसङ्गतः। (२) पाठोऽयं आदर्शसम्मत एव मुद्रितः परन्त्वयं न समीचीनः, षष्टिभागमृतावितिव पाठो युज्यते।

कृष्णपक्षे दशम्यादौ मेषं गच्छेद्दिवाकरः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

दशम्यादौ नवम्यामिति।

तथा।

माधवाद्येषु(१) मासेषु षट्सु दर्शद्वयं यदा।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

विष्णुः।

अमावास्यामतिक्रम्य यदा सङ्क्रमते रविः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥
पञ्चम्यां कृष्णपक्षे च मेषं गच्छेद्दिवाकरः।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

अत्रायं सङ्क्षेपार्थः। अधिमासो यदा दक्षिणायनात् प्राक् मेषादित्रिके पतति तदा द्विराषाढ़ः प्रथमवर्षे एव सम्पद्यते, तदा दक्षिणायनानन्तरं विष्णुः स्वपिति यदा कर्कटादित्रिके अधिमासः पतति तदा आगामिवर्षे शेषकर्कटादित्ये अवश्यमाषाढ़ीपौर्णमासी भवति तस्या वा आषाढ़त्वात् तत्रैव विष्णुः स्वपिति, द्विविधस्यापि च मासपातस्य नामावास्याद्वयादि स्मृतं, तथा च सति यदा कर्कटादित्रिके अमावास्याद्वयं भवति तदा शुक्लप्रतिपदि द्वितीयायां वा कन्यातुलासङ्क्रान्तिर्भवति, आगामिवर्षे मेषसङ्क्रान्तिरपि तथैव, प्रतिमासं सङ्क्रमणे च दिनद्वयवृद्धा पञ्चम्यां षड़शीतिमिथुनसङ्क्रान्तिर्भवति तदा द्विराषाढ़ं प्रकल्प्य कर्कटे-

(१) माधवाद्येष्विति ख०।

ऽप्यभि प्रथमं न तु परमार्थतो द्विराषाढ़ः । तथाच गणितकुम-ज्ञानां मिथुनादित्ये भोगे अतीतेऽपि गण्यमाने भास्करे मिथुन-भाग एवादित्यस्य गणिते आषाढ़ेति न तत्त्वतो गणितामावास्या-दिनाभ्यां द्विराषाढ़ो गम्यते ।

तदाह सत्यः ।

> दृषं त्यक्त्वा चतुर्थ्यंशे षड़शीतिः स्थिते यदा ।
> तदा दैवविदा चिन्त्यं द्विराषाढ़स्य कल्पनम् ॥

तथाच ज्योतिःशास्त्रे ।

> शुक्लचतुर्थीमतिक्रम्य यदा सङ्क्रमते रविः ।
> द्विराषाढ़ं प्रकल्प्यैव कर्कटादौ स्वपेद्धरिः ॥
> प्रथमे च द्वितीये वा शुक्ले मेषमियाद्रविः ।
> द्विराषाढ़क्रिया तावद्यावद्विष्णुप्रबोधनम् ॥

विष्णुः परकर्कटके स्वपेत् । शेषं शक्रोत्सवादि यथाकालमेव कार्य्यं । तथा हि ।

> द्विराषाढ़विकल्पोऽयं वैकुण्ठशयनं प्रति ।
> ध्वजस्तु(१) शतयज्ञस्य सिंहे एव विधीयते ॥

बौधायनश्च ।

> द्विराषाढ़क्रिया तावद् यावद्विष्णोः प्रबोधनम् ।
> विशुद्धे तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया ॥

यदा तु प्रथमे वर्षे द्विराषाढ़े कर्कटे हरिशयनं तदा कन्यायां

(१) अत्र ध्वजस्तु शतयज्ञस्य इत्येवं पाठो युक्तः तथाच शतयज्ञस्य शतक्रतो-रिन्द्रस्य ध्वजस्तु इन्द्रध्वजः सिंहे विधीयते इत्यन्वयः ।

परिवर्त्तनं शक्रोत्थापनञ्च, तुलायां दुर्गोत्सवः, वृश्चिके वासुदेवोत्थापनं ।

यदाह विरिञ्चः ।

दक्षिणाशामुखे भानौ स्वपेद्यदि हरिस्तदा ।

कन्या-वृश्चिकयोरेव विवर्त्तन-विबोधने ॥

तथा ।

कर्कटके हरौ सुप्ते शक्रध्वजक्रियाश्विने ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम् ॥

इति । यदा तु प्रकल्प्यते द्विराषाढ़ः, यदा च स्वरूपतस्तदा शुक्लपक्षे श्रवणद्वये सति ।

यथा कर्त्तव्यमाह मत्स्यः ।

द्विराषाढ़े तु सम्प्राप्ते यदि सिंहे हरिः स्वपेत् ।

परञ्च स्थापयेच्छक्रं कन्यायान्तु विसर्जयेत् ॥

अथ कन्यायामेव श्रवणद्वयं भवति तदा नामादिश्रवणे शक्रोत्थापनं, अपरस्मिन् दुर्गोत्थापनं । तदाह ।

सिंहकन्येऽथ पक्षे च शुक्रादेः पक्षसंयुते ।

सिंहे परे शक्रमहः कन्यायां सिंह-दुर्गयोः[१] ॥

शुक्लपक्षद्वये पूजा कल्पोऽयमपरः स्मृतः ।

द्विराषाढ़स्य विवृद्धिः स्वयमाप्निस्य तावता ॥

कुत इत्यपेक्षायामाह ।

शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तनम् ।

मासद्वयेन निर्दिष्टं प्रयत्नादि न कोविदैः ॥

---

(१) वचनमिदं आदर्शसम्मतमेव मुद्रितं परन्तु न सम्यक् ।

दुर्गायाश्च पिभिर्मासैरधोमासं विनैव तत् ।
अधिमासनिपाते तु क्रमाद्दिन्द्रादिकान् हरीन् ।
कन्या-तुला-वृश्चिकेषु क्रमशोत्थापयेद्‌ध्रुवम् ॥

अधिमासनिपात इत्यस्यायमपरोऽर्थः यदा कर्कटादिषु पौर्णमासीद्वयं भवति "अधिमासनिपाते तु क्रमाद्दिन्द्रादिकान् हरीन्"। इति[१] ।

तथा हि ।

आषाढद्वयसंयुक्तं पौर्णमासद्वयं यदा ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति।

तथाचोक्तं ।

वैशाखादितुलान्ते तु यदि पूर्णाद्वयं भवेत् ।
द्विराषाढः स विज्ञेयः श्रवणावर्त्तनादिषु ॥

वैशाखादीत्युपलक्षणं फाल्गुनद्वयस्यापि मासस्य चिन्त्यतया सम्भवात् तत्र फाल्गुनादावधिमासपाते कर्कटे हरिशयने सति मासचतुष्टयेनोत्थानं भवति कर्कटादिचतुष्टये त्वधिमासपाताभावेन एवाषाढादा हरिशयने इत्ते श्रावणादीनामन्यत्र द्वैविध्ये वृश्चिक एव कार्त्तिकमासो वर्त्तते तेन पञ्चभिरपि मासैरुत्थानं "आभाकासितपक्षेष्वित्यस्य बहुलवचनत्वेनाधिकत्वात् "प्रबुध्यते मासचतुष्टयेनेत्यस्य प्रायिकाभिप्रायिकानुवादत्वात् एक एवासौ मासः ।

यदाह बादरायणः ।

एकमासस्थिते सूर्य्ये यदि स्यादधिमासकः ।

(१) इत्थं पाठः पूर्व्वापरसङ्गतिराहित्यात् न समीचीनः ।

एक एव हि मासोऽसौ[१] वद्धिभिर्द्विवधैर्मतः ॥ इति।

एवं द्विराषाढ़कल्पे प्राप्ते द्विराषाढ़ उच्यते न तु स्वरूपतो द्विराषाढ़ः एवं परिवर्त्तन-दुर्गोत्सवयोरपि बोद्धव्यं। तथथा मा-घवोदयं भाद्रपदोदयं भवति तदा देवशयनाक्षादशयेव कन्यायां शक्रोत्थापनम् परतः तस्माच्च मासेन दुर्गोत्थापनं मासद्वयेन विष्णोः। यदा त्वाश्विनोदयं भवति तदा सिंह एव शक्रोत्थापनं परिवर्त्तते तस्मान्मासद्वयेन दुर्गायाश्चयेण च चयेण च विष्णोरुत्थापनं, यदा तु कार्त्तिकोदयं भवति तदापि द्विराषाढ़ेन द्विराषाढ़कल्पनं कर्कटे हरिशयनं शक्रोत्सवादि तु यथाकालमित्युक्तं। भविष्योत्तरे अधि-मासनिपातेऽपि तुलायामेव कृष्णोत्थापनमभिहितं।

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम्।
तुलायाश्च महाराज पुनरुत्थापयेत् तु तम्॥
अधिमासे प्रपतिते एष एव विधिक्रमः।
नान्यथा स्वापयेत्कृष्णं नान्यथोत्थापयेत्तथा॥

इत्यलमतिविस्तरेण।

ब्रह्माण्डपुराणे।

द्वादश्यान्तु सिते पक्षे मासे प्रौष्ठपदे तथा।
शक्रमुत्थापयेद्राजा विश्व-श्रवण-वासवे॥

'विश्वं' उत्तराषाढ़ा, 'वासवं' धनिष्ठा, श्रवणनक्षत्रस्यपादे द्वादश्या योगः सुप्रशस्ततमः।

तदुक्तं।

---

(१) द्विमासोऽसाविति ख०।

वैष्णवादिगते चन्द्रे शक्रमुत्थापयेन्नृप ।
भरण्यामन्त्यपादे च निशि सुप्ते विसर्जयेत् ॥
अथवाऽऽद्यपादे च भरण्यां श्रवणर्क्षके ।
शक्रं प्रवाहयेद्देवं यथा राजा न पश्यति ॥
सौर-भौमाधिपे वारे सूतके मृतकेऽपि वा ।
भूमिकम्पादिकोत्पाते शक्रं नैव प्रशंसयेत् ॥

निमित्तविशेषोपनिपाते तु भरण्यन्त्यपादादारभ्येत्यनुसन्धेयम् ।

आह वृद्धवशिष्ठः ।

चन्द्रस्थानगते भानौ यदा स्वपिति केशवः ।
शशिपुत्रस्थे भानौ न चोत्थाप्यः पुरन्दरः ॥

'चन्द्रस्थानं' कर्कटकः, 'शशिपुत्रस्थानं' कन्येति ।

अथवाह ।

दिनपादे च कन्यायां शक्रं नोत्थापयेद्यदि
राज्ञो राज्यं विनश्येत प्रजा चैव निपीड्यते ॥
काले तु स्थापिते शक्रे चिरं जीवति पार्थिवः ।
प्रजानामूर्जवादेवं भवेद्दुग्धवती क्षितिः ॥ इति ।

शेषं दिनपादविवेकदर्शितमनुसन्धेयमिति ।

देवीपुराणे ।

प्रौष्ठपदेन चाष्टम्यां शुक्लायां शोभनर्क्षके ।
आश्विने वाथ शुक्लायां श्रवणे वा समुच्छ्रयेत् ॥

गर्गः ।

सिंहं गते दिनकरे सितपाण्डपक्षे

सर्व्वांशपादमुपगच्छति वै ग्रशाङ्के ।
उत्तिष्ठते विविधमन्दिरवृन्दवन्द्यो
याम्यां ततो निशि निशीदति वज्रपाणिः ॥ इति ।

अथ च हरिशब्देन हरिदैवत्यं श्रवणनक्षत्रमुपलभ्यते ।

भविष्योत्तरे ।

राज्ञान्येनापि कर्त्तव्यो वर्षे वर्षे महोत्सवः ।
इन्द्रध्वजसमुत्थानं महादानकृतं यदि ।
ततस्तु द्वादशे वर्षे कर्त्तव्यं नान्तरा पुनः ॥

देवीपुराणे । सूर्य्यरथयात्रायाः कथञ्चिदकरणे द्वादशाब्द
ग्रक्रध्वजः कर्त्तव्य इत्यभिधायोक्तम् ।

इन्द्रध्वजस्य चाप्येवमुच्छ्रायो न कृतो यदि ।
ततो द्वादशमे वर्षे कर्त्तव्यो नान्तरा पुनः ॥
शक्रोत्सवो नभस्ये तु कार्य्यः सिंहगते रवौ ।
द्वादश्यां शुक्लपक्षे तु नक्षत्रे विष्णुदैवते ॥
तत्पातश्च भरण्यां च्याक्षवस्यामाश्विनस्य तु ।
अर्च्चयित्वा भगवतीं ततः सद्यो विसर्जयेत् ॥

भागवते ।

कन्यायां कृष्णपक्षे तु पूजयित्वा समेद्विना ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः ॥
शुक्लपक्षे चतुर्थ्यां च देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नापयेत्तु शुभैर्जलैः ॥
सप्तम्यामम्बिकापूजा अष्टम्यां समुपोषणम् ।

प्रताप आगरेऽथैव नवम्यां विधिवद्बलिः॥
सम्प्रेषणं दशम्यान्तु क्रीडाकौतुकमङ्गलैः।
नीराजनं दशम्याञ्च बलवृद्धिकरं भवेत्॥

वाराहे।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयेत्।
उत्तरेणार्चनं कृत्वा श्रवणेन विसर्जयेत्।
मूलेन सकलां बिल्वशाखामाहृत्य पूजयेत्॥
श्रवणपादो निशाभागे श्रवणस्य यदा भवेत्।
तदा देव्याः समुत्थानं नवम्यां दिनभागतः।
दशम्यां बलवृद्ध्यर्थं कुर्यान्नीराजनं नृप॥
स्वात्यादित्यहतीयादौ सप्तावष्टाश्विने सति।
रक्षां कृत्वा दशम्यान्तु शान्त्या नीराजयेत्तदा॥

नीराजनसंज्ञितां शान्तिं कुर्यादित्यर्थः।

आह व्यासः।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयेत्।
तदा देव्याः समुत्थानं नवम्यां न पुनर्दिवा॥
श्रवणपादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा सम्प्रेषणं देव्या दशम्यां साधनोत्सवैः॥
चापचये तु मूलादौ नवम्यामाश्विने सिते।
चण्डिकामुपचारैश्च पूजयेद्राष्ट्रवृद्धये॥
पूर्वाषाढे तु कन्यायामुत्थानं नवयोषितः।
कुर्वतो क्षीयते राष्ट्रं प्रजा च विकला भवेत्॥ इति।

ब्रह्माण्डपुराणे।

तुलायां तिलतैलेन सायंसन्ध्यासमागमे।
आकाशदीपं यो दद्यान्मासमेकं निरन्तरम्।
सश्रीकाय श्रीपतये स श्रिया न विमुच्यते॥
दामोदराय नभसि तुलायां लोलया सह।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे॥

इति दीपदानमन्त्रः।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
सुखरात्रिस्वरूपा सा प्रदीपोज्वलनाय वै॥
कुसुम्भकुसुमैर्गन्धैर्दीपैर्गोरोचनाफलैः।
वसुर्वंधूनववधूस[1] पृच्छेत् कुशलया गिरा॥
पूजयेच्च सदा लक्ष्मीमलक्ष्मीं मलनाशिनीम्।
चये पञ्चपताकानां ध्वजमेकं गृहे न्यसेत्॥

वाराहे।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले तदा विष्णुस्तुलायामथ वृश्चिके॥

लक्ष्मीप्रबोधः दीपालिकेति यस्य लोके प्रसिद्धिः।

कौमुदी यक्षरात्रिश्च कौसुमी फाल्गुनी तथा।
वासन्तिरिति विज्ञेया देशस्य महिमाश्रये॥
आश्विने पौर्णमास्याच्च निशादेः कौतुकं स्मृतम्।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये॥

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्तु न समीचीनः। बन्धूर्बन्धुनवबन्धूंश्चेति पाठो युज्यते।

कार्त्तिके सितपक्षादौ तिथौ तु कुसुमांशुकैः।
यथार्चा यथराचिः स्यात् कार्य्या चेष्टसुखाय सा॥
माघशुक्लचतुर्थ्यान्तु वरमाराध्य च श्रियः।
पञ्चम्यां कुन्दकुसुमैः पूजा सा कौसुमी स्मृता॥
फाल्गुने पौर्णमास्यान्तु यदा वायविनायकः।
ज्ञेया सा फाल्गुनी लोके कार्य्या लोकसुमङ्गले॥
चैत्राष्टम्यामशोकैस्तु त्रयोदश्यां स्मरार्चनम्।
तत्र कार्य्यमशोकार्च्चं ज्ञेया वायन्तिकेति सा॥

अथ ज्योतिःशास्त्रे।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले यदा विष्णुस्तुलायामधिगच्छति।
उत्तिष्ठत्ययतो विष्णुः पश्चात् कृष्णचतुर्दशीम्॥

अथ भविष्यत्पुराणे।

स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्।
प्रतिपद्ब्रह्मणश्चापि शुक्लमिश्रैः सदीपकैः।
वासोभिरक्षतैर्माल्यैर्गन्धैश्चेतद्ब्रह्मणः पदम्॥
पुष्पैर्गन्धैर्नैवेद्यैरात्मानं पूजयेद्बुधः।
तस्यां प्रतिपदायाञ्च स गच्छेद्ब्रह्मणः पदम्॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये विष्णुशयनादिकालनिर्णयो नाम सप्तदशोऽध्यायः।

---

## अथाष्टादशोऽध्यायः ।

### अथ विष्णुनामकीर्त्तने कालविशेषः ।

विष्णुधर्म्मोत्तरे वज्र उवाच ।

कस्मिन् काले तु देवस्य किं किं नाम प्रकीर्त्तयेत् ।
एतन्मे संशयं छिन्धि त्वं हि सर्व्वविदुच्यसे ॥

मार्कण्डेय उवाच ।

पुरुषं वामदेवञ्च व्यासं सङ्कर्षणं प्रभुम् ।
प्रद्युम्नमनिरुद्धञ्च क्रमादिषु प्रकीर्त्तयेत् ।
बलभद्रं तथा कृष्णं कीर्त्तयेत दिनक्षये ॥
माधवं पुण्डरीकाक्षं तथा वै भोगशायिनम् ।
पद्मनाभं हृषीकेशं तथा देवं त्रिविक्रमम् ॥
क्रमेण राजशार्दूल वसन्तादिषु कीर्त्तयेत् ।
विष्णुञ्च मधुहन्तारं तथा देवं त्रिविक्रमम् ॥
वामनं श्रीधरञ्चैव हृषीकेशं तथैव च ।
दामोदरं पद्मनाभं केशवञ्च यदूत्तमम् ॥
नारायणं माधवञ्च गोविन्दञ्च तथा क्रमात् ।
चैत्रादिषु च मासेषु देवदेवमनुस्मरेत् ।
प्रद्युम्नमनिरुद्धञ्च पक्षयोः शुक्ल-कृष्णयोः ॥
शर्व्वः सर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
आदित्यादिषु वारेषु क्रमादेवमनुस्मरेत् ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥
अव्ययः पुण्डरीकाक्षो विश्वकर्मा शुचिश्रवाः।
सम्भवो भावनोभर्त्ता प्रभवः प्रभुरीश्वरः॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
अग्राह्यः शाश्वतो धाता कृष्णश्चैतानतुस्मरन्।
देवदेवस्य नामानि कथितानि च यादव॥
मत्स्याद्यं श्रीपतिं विष्णुं कपिलं श्रीपतिं प्रभुम्।
दामोदरं हृषीकेशं गोविन्दं मधुसूदनम्॥
भूधरङ्गदिनं देवं शङ्खिनं पद्मिनं तथा।
चक्रिणञ्च महाराज प्रथमादिषु संस्मरेत्।
सर्वदा सर्वदेवानां देवदेवस्य यादव॥
नामानि सर्वाणि जनार्दनस्य
कालश्च सर्वः पुरुषप्रवीर।
तस्मात्सदा सर्वगतस्य नाम
ग्राह्यं यथेष्टं वरदस्य राजन्॥

वज्र उवाच।

कार्यारम्भे कथं कस्मिन् किं नाम परिकीर्त्तयेत्।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे॥

मार्कण्डेय उवाच।

चक्रिणं चक्रिणञ्चैव शार्ङ्गिणं खड्गिनं तथा।
क्षोणार्थी प्रवसन् राजन् दिक्षु प्राच्यादिषु स्मरेत्॥

अच्युतञ्चाधिकञ्चैव सर्वं सर्वेश्वरं प्रभुम् ।
संस्मरेत् पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥
कूर्मं वाराहं मत्स्यं वा जलप्रतरणे स्मरेत् ।
भ्राजिष्णुमग्निजनने जपेन्नाम त्वतन्द्रितः ॥
संग्रामाभिमुखो गच्छन् संस्मरेदपराजितम् ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ।
अच्युतञ्चामृतञ्चैव जपेदौषधकर्मणि ॥
गरुडध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदुष्टशिरोरोगविषवीर्यं प्रशाम्यति ॥
यत्नबन्धपीडासु देवबाधाटवीषु च ।
दस्युवैरनिरोधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तथा तीव्रे नरसिंहेति कीर्त्तयेत् ॥
नारायणं शार्ङ्गधरं श्रीधरं गजमोचनम् ।
वामनं खड्गिनञ्चैव दुःस्वप्नेषु तु संस्मरेत् ॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ।
बलभद्रन्तु युद्धार्थी कृष्यारम्भे हलायुधम् ।
उत्तरणे वणिज्यार्थी श्रीराममभ्युदये नृप ॥
जगतो मङ्गलं विष्णुं माङ्गल्येषु च कीर्त्तयेत् ।
अग्निघातेष्वशेषेषु विशोकेषु तथा जपेत्(१) ॥
उत्तिष्ठन् कीर्त्तयेद्विष्णुं प्रस्वापे माधवं नरः ।

(१) विशोकेति तथा जपेदिति ख० ।

भोजने चैव गोविन्दं सर्व्वत्र मधुसूदनम् ॥
नारायणं सर्व्वकालं चतप्रस्खलितादिषु।
स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ॥
कीर्त्तयेद्वासुदेवञ्च अनुक्तेष्वपि यादवम्।
कार्य्यारम्भे तथा राजन् यथेष्टं नाम कीर्त्तयेत् ॥

सर्व्वाणि नामानि हि तस्य राजन्
सर्व्वार्थसिद्धौ तु भवन्ति पुंसः।
तस्माद्यथेष्टं खलु देवनाम
सर्व्वेषु कार्य्येषु जपेत भक्त्या ॥
इति विष्णुनामकीर्त्तने कालविशेषः।

---

## अथ मुख्यकालातिक्रमे कालाः।

ते च गौणा वाचनिकाश्चेति द्विप्रकाराः। तदेवं विचार्य्यते मुख्यकालासम्भवे गौणकालग्रहणं कार्य्यं न वेति, ननु को मुख्यः को वा गौणः। यो विहितः स मुख्यः। यथा वृद्धिश्राद्धादौ प्रातरादिः। यस्माविहितः तत्समीपवर्त्ती तेष्वेवाङ्गभावं नीयमानः सङ्गवादिः स गौणः। तदाह त्रिकाण्डमण्डनः।

स्वकालादुत्तरो गौणः कालः सर्व्वस्य कर्म्मणः।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि ॥ इति।

अस्यार्थः पूर्व्वोत्तरयोः पूर्व्वस्य कर्म्मणो यः स्वकालस्तस्मादुपरितनः उपरितनकर्म्मकालाच्च पूर्व्वभावी पूर्व्वापरयोरन्तरालकाल इति यावत् सपूर्व्वस्मिन् कर्म्मणि गौणः। यद्वा यथोक्तान्तरालवदागामिक्रिया-

मुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्त इति। कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानाय यद्यमाग्रक्ष्णुते यतः स्वकालात् प्रच्युतं पूर्वं कर्म तावद्विनष्टप्रायं उत्तरञ्च स्वकालादप्रच्युतत्वाद्-विनष्टरूपं तत्र यद्युत्तरकर्मकाले पूर्वं कर्म्म क्रियते तदा विनष्टसमाधानार्थं अविनष्टविनाशनं प्रसज्यते। तन्मृतजीवनाय जीवमारणमिव स्यात्। अत्र ब्रूमः। उत्तरे कर्मकाले द्वयोरवकाशे सतीदमुच्यते न पुनरसत्यपि तस्मिन्निति। ननु मुख्यकालसमीपवर्त्तिनः कालस्याभिधाविनाभूतप्रवृत्तिलभ्यत्वाल्लाक्षणिकत्वमेवोचितं, सत्यमेवं, तथापि तत्कालोपलक्षणीभूतातपमार्द्दवादिगुणोपनीतया लौकिक्या प्रातरादिशब्दप्रवृत्त्या तस्य गौणत्वमप्यस्त्येवेति गौणत्वोक्तिर्न विरुध्यते। ननु तदनुपदेशात्कथं ग्राह्यत्वमाग्रक्ष्णुते, प्रतिनिधिन्यायेनेति ब्रूमः। नन्वेवं तर्हि यथाकथञ्चित्साद्दृश्यात्मध्याह्नादावपि कदाचित् प्रातरादित्यानि प्रसज्येरन्, किमत्रानिष्टं क्रियते एवं हि कदाचिदत्यन्तसादृश्यवतः प्रचुरगौणप्रयोगवञ्जिनः सङ्गवादेरलाभात्, तदेवमस्मिन् संशये कश्चित् पूर्वाह्णे दैविकं श्राद्धमित्यादिकालसंयुक्तेषु वाक्येषु कालं प्रति कर्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकालातिक्रमेण गुणभूतकर्मानुग्रहाय कालान्तरानुष्ठानं न कार्य्यमिति पूर्वपक्षमभिप्रेत्य सिद्धान्तितवान्, काले हि कर्म चोद्यते न कर्मणि कालः अतः कर्मणामेव प्राधान्यं कालमनूद्य कर्मणो विधानात्। ततः कर्म प्रति गुणभूतविहितकालातिक्रमे प्रधानभूतकर्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्य्यं। कालहाने कर्मणोऽपि त्यागस्यान्याय्यत्वात्। न श्लोकव्यञ्जनं विना शेषभोजनमेव त्यज्यते। तदयुक्तम्। न तावत्कर्म-

गुणीभावेनाप पूर्वपक्षो घटते कर्मणः फलसम्बन्धात्। फलवत्सन्निधावफलं तदङ्गमिति न्यायेन कालस्यैवाङ्गत्वात्। न च कर्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थवाद इति वाच्यम्। कालस्य फलवत्कर्मार्थत्वावगमात्, नापि कालगुणीभावोक्तः सिद्धान्तो घटते, असिद्धत्वाभासोपन्यासात्, न ह्यत्र कालानुवादेन कर्म विधीयते, कालस्यान्यतः प्राप्तिविरहात्। ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽप्यमावास्यादिरूपेण लोकव्यवहारादेव ज्ञातस्यानुवादो भविष्यति। नैवम्। लोकसिद्धकालस्वरूपानुवादेन कर्मविधाने स्वयमफलत्वेन फलवत्कर्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गात्। किं चास्मिन् कर्मण्युपदेश्यस्य कालस्य न कर्मान्तरसम्बन्धो घटते तस्यैतत्कर्मानुष्ठानेऽनन्तरमेवाऽनुष्ठितत्वात्। नन्वेवं तर्हि यजेत स्वर्गकाम इत्यत्रापि लोकादेवावगतं स्वर्गकामिनमनूद्य यागविधेरवधारणात् कथं न विध्यानर्थक्यं, उच्यते, यद्यपि स्वर्गकामस्योद्देश्यतया वाक्येऽन्वयः प्रतीयते तथापि भावनायाः प्रथमं भाव्यस्यापेक्षणात् पुरुषस्य च सिद्धरूपतया तदनर्हत्वात्स्वर्गकामपदेन कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्प्यते स्वर्गकामस्तु पूर्वसिद्ध एवानूद्यते, यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरत्वं वाक्यं एवमिहापि। तदुक्तं भट्टमिश्रैः।

अपेक्षितत्वात् भाव्यस्य कामशब्दा हि तत्पराः।
विशेषणप्रधानत्वं दध्नीत्यादिषु दर्शितमिति॥

अतः कालानुवादेन तत्र कर्मविधिरित्ययुक्तम्। तदेवं यदोक्तौ पूर्वोत्तरपक्षावयुक्तौ कौ च तर्हि तौ युक्तौ। उच्यते। तत्र तावत्पूर्वपक्षः नित्यं नैमित्तिकं चावश्यकत्वेन प्राप्ते तादृग्भिन्नरूपनिर्वाहार्थं यथा मधुपादिष्वुपबन्धे विहितासम्पत्तौ तत्सदृशप्रतिनिधित्वं

कर्त्तव्यमितिस्थिते तत्कालासम्पत्तौ गौणकालग्रहणं कार्य्यम्।.

तदाह चिकाण्डमण्डनः।

मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशोभवेदिति॥

'ईदृशः' मुख्यकालवदृशः, अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता। स्मृतितिथावपि गौणकालग्रहणं दर्शयन्ति।

यथाकथञ्चित् कर्त्तव्यं नित्यं कर्म विजानता।
न शाम्यस्य विलोपोऽस्ति पैठकस्य विशेषत इति॥

तथा।

दिवोदितानि कर्माणि प्रमादादकृतानि वै।
यामिन्याः प्रहरं यावत्तावत् सर्व्वाणि कारयेत्।
सर्व्वौ रात्रौ न कर्त्तव्यं श्राद्धं खलु विचक्षणैः॥ इत्यादि।

सन्ध्यादिकालविशेषनिषेधस्य गौणत्वेन तत्कालग्रहणप्राप्तौ सत्यामेवावकल्प्यते। नित्यनैमित्तिकेषु च यथा शक्नुयात् तथा कुर्य्यादित्युपबन्धसामर्थ्यान्नित्यवदतस्ततोऽन्यान्यप्यङ्गान्यनित्यानि भवन्ति।

तथाच पैठीनसिः।

प्रधानवर्ज्जितान्यङ्गानि भवन्ति न भवन्ति चेति।

ननु यदि मुख्यकालातिक्रमे गौणकालग्रहणं न विरुद्धम् तर्हि दर्शपूर्णमासपार्वणश्राद्धादीनाममावास्यादिविहितकालाभावे पञ्चम्यादिषु कर्त्तव्यत्वं प्रसज्येत। का नामैषा प्रसक्तिरभिमतमेव हि गौणकालशौकारवादिनस्तदा तदनुष्ठानम्। एतच्च गौणकालग्रहणं न काम्येषु। तत्र हि सर्वाङ्गोपसंहारशक्तस्यैवाधिकारप्रतिपादनात्। गौणकालग्रहणे तु कर्मानुष्ठाने कश्चिद्विशेषस्त्रिकाण्डमण्डनोक्तप्रसङ्गादुच्यते।

गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् ।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥

कालान्तरोदितं कर्म एतेषु पूर्वोक्तलक्षणेषु गौणकालेष्वाचरेत् । यथान्तरमपि तेनैवोक्तं ।

. प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ।

अकृत्वेत्यत्र पूर्वकालतापतीतिरविवक्षिता । तदेवं गौणकालग्रहणे प्राप्तेऽभिधीयते सर्व्वत्र तत्तत्कालनिर्द्दिष्टस्य कालस्यानुपादेयत्वे उद्देश्यैकस्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्य्यं विहितकालाभावेऽधिकाराभावः कालापनीताधिकरणे प्रपञ्चात्र निमित्तत्वेत्यत्र सूत्रे प्रतिपादितः ।

अत एव लौगाक्षिः ।

गणिताज्ज्ञायते कालः काले तिष्ठन्ति देवताः ।
वरन्त्वेकाहुतिः काले नाकाले लक्षकोटिशः ॥

यत्तु त्रिकाण्डमण्डनेन गौणकालग्रहणमुक्तं तत् पूर्व्वपक्षन्यायस्यैव सिद्धान्ततामभिमन्यमानेनोक्तमित्युपेक्षणीयं । यत्तु यथाकथञ्चिदित्यादिस्मरणं न तत्र गौणकालग्रहणं प्रतिपाद्यते किन्त्वग्रहणमेव । यतस्तस्यायमर्थोऽवगम्यते स्वकालप्राप्तस्य कर्म्मणोमुख्यद्रव्यासम्भवेऽसिवग्रादिलोपोऽननुष्ठानं न कार्य्यम्, किन्तु स्वकाल एव यथाकथञ्चिन्मुख्यद्रव्यसदृशोपादानेन किञ्चिदिकलमपि कर्त्तव्यमिति । यदपि "दिवोदितानि कर्म्माणीत्यादिवचनं न तेन सर्व्वेष्वपि कर्म्मसु सर्व्वेषां च गौणकालानां गौणकालयुक्त्या ग्रहणमुच्यते किन्तु केषुचिदेव कर्म्मसु किञ्चिदेव कालान्तरमनुकल्पत्वेन मुख्यकालवत्प्राधान्यमात्रमेव विधीयते। अतो नैतद्वचनबलेन संवत्सरर्त्तु-मास-तिथ्या-

दिकालविशेषविहितानि कर्माणि तत्तत्कालातिक्रमे कालान्तरेऽपि कर्तुं युज्यन्ते। यत्तु सन्ध्या-रात्र्योः श्राद्धनिषेधः सोऽपि रागतः प्राप्तस्य भक्षणादेरिव न्यायाभावोत्पादितमोहप्राप्तस्योपपद्यते। अथवा।

"द्रव्यं ब्राह्मणसम्पत्तिः श्राद्धं प्रतिनिमित्तकाथा।
अकाले यदि वा काले तीर्थश्राद्धं सदा नरैः॥

प्राप्तैरेव हि कर्त्तव्यम्"। इत्यादिभिरपराह्णादिव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य सन्ध्यादिकालेष्वयं प्रतिषेधः। यत्तु मुख्यकालातिक्रमे नित्य-नैमित्तिकानां गौणकालेऽनुष्ठानं दृश्यते तत् क्वचित् शिष्ट-गर्हापरिहार-मनःपरितोषार्थं, क्वचिदानुकल्पत्वेन कालान्तरविधिरित्यनवद्यम्। उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्यलोभान्मुख्यकालातिक्रमो न कार्य्यः, एतदेव च सन्देहपूर्वकमुपन्यस्य निकाषमणकेन निर्णीतम्।

मुख्यकाले हि मुख्यत्वेन् साधनं नैव लभ्यते।
तत्काल-द्रव्ययोः कस्य मुख्यत्वं गौणतापि वा॥
मुख्यकालमुपाश्रित्य गौणं मुख्यस्य साधनम्।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्॥

तदेवमेतच्छिद्धं वचनमन्तरेण गौणकालग्रहणं न कार्य्यं सति तु वचने गौणस्य, तस्मात् परस्यापि ग्रहणं कार्य्यमिति।

इति श्रीमद्राजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णयः समाप्तः।

शिवमस्तु।